

शासनशार्दूल—सुरतना सागरजी

(अन्तिमपञ्चदशदिनानि यावद्ध्यानलीनार्धपद्मासना ।)

निर्याणम्—सूर्यपुरे संवत् २००६ वैशाख कृष्ण पञ्चमी मंदवासरे ता ६-५-१९५०

# VEETRĀGA STOTRAM

## BY HEMACHANDRĀCHĀRYA

### WITH AVACHURNI, VIVARANA, AND GUJARATI TRANSLATION OF THE ORIGINAL



*Avachurni by—*
Somodaya Gani
Composed in
V. S 1512



*Vivarana by—*
Shree Prabhanandasuriji
Composed in
V S



*Translated and Edited by—*
'annyāsa Shree Chandrasāgar Gani's
Most Obedient disciple Munishri
Chandraprabhasāgar

*In V S 2006*



ı Era 2006 ] [ Christian Era 1949

# VEETRĀGA STOTRAM

## BY HEMACHANDRĀCHĀRYA

### WITH AVACHURNI, VIVARANA, AND GUJARĀTI TRANSLATION OF THE ORIGINAL



*Avachurni by—*
Somodaya Gani
Composed in
V. S 1512



*Vivarana by—*
Shree Prabhanandasuriji
Composed in
V S



*Translated and Edited by—*

Pannyāsa Shree Chandrasāgar Gani's
Most Obedient disciple Munishri
Chandraprabhasāgar

*In V S 2006*



Vikram Era 2006 ] [ Christian Era 1949

Price Rs. 3/-

Sheth Devchand Lālbhai Jain Pustkoddhār
Series No. 1.

# PREFACE OF FIRST EDITION.

---

Jain Literature, comprising as it does almost all the branches that are characteristic of ancient Indian literature, holds no insignificent a niche in the gallery of that literature It is considerable even as it is at present and was more so in former times This is not the proper place to enumerate the great writers and their works that constitute the glory of that literature. The fact that the Jain writers had flourished in great abundance in times gone by, is evident from the vast stock of literature that has survived this day, though it is yet in an unexplored state Their eminence in subject matter as well as language is manifest to those who are conversant with it.

Along with Indian literature at large, Jain literature too has been a participator in the unhappy fate it met with at the hands partly of alien bigotry, partly of mutual religious jealasy and

from the peculiarities of the climate There was a time when there was no other alternative to secure the very existance of such literature but that of burying it in subterranean archives The very method employed for the safety of the works became later on instrumental in further diminishing the stock and that at a time when there was not the least chance of its being further enriched. Those upon whom had fallen the task of being the hereditary custodians of such collections had inherited the traditions of their forefathers viz. those of not suffering any part of such collection to see the rays of the Sun lest they might be deprived of them and the works most dear to them be destroyed by the assailants It is very strange indeed that these traditions are alive even at this day when there is peace all round, and when the time is most propitious for the developement of literature. Fire even has contributed its quota to the destruction of the records Add to these the all round degeneration among the followers of the faith when far from the prospects of further expansion the faith was in imminent danger of being extinct. It was during this time that more attention was paid to the performance of external rites and ceremonies ( and practically nothing was done

in the direction of education and literature and the stirring up of the inner spirit of faith. It is only very recently that a practical revival of a salutary character is visible Owing to circumstances above mentioned, the literary results of the arduous labour and the great learning of the Acharyas and the Sadhus of the faith, could not be made accessible.

It may perhaps not be out of place here to give in short the history of this Fund that has led to the publication of the series The late Sheth Devchand Lalbhai in whose memory this fund has been inaugurated, left by his will a sum of Rs 45000 along with other sums to be spent in various other matters, to be devoted to some benevolent purpose This amount was further enhanced by a sum of Rs 25000 set a part by Mr Gulabchand Devchand to be spent in some good purpose in the memory of the said Sheth Devchand Lalbhai It was on the advice of Panyas Shree Anandsāgar that these sums, which make the original funds in Trust, were amalgameted, and the present Trust was inaugurated At present the funds of this Trust amount to about Rs 100000 the original being further enhanced by the property of Bai Vichkore, the deceased daughter of the said Sheth Dev-

chand Lalbhai which was directed to be made over to this trust by her The object of this Trust is to devote the interest of the funds for the preservation and the development of "The Jain Swetamber religious literature "

The trustees are now in a position to bring out the present volume as the first of the series to be published from time to time by this Trust The author of this treatise is the well known Kalikal Sarvagna Hemchandracharya who hardly needs any introduction to Sanskrit students What an eminent place the said author occupies among Sanskrit writers it is unnecessary to say But this much one can say that he has written on various subjects in all of which his knowledge seems to be supreme At the request of Shri Kumarpal a king of Gujrat who was considering *Hemchandracharya as his spiritual preceptor* the author of this book wrote thirty two cantos out of which twenty are comprised in this volume and the remaining twelve in "Yoga Shastra" Further upon this book Prabhananda Suri, a disciple of Abhayadev Suri and a disciple ( whose name can not be traced out ) of Vishalraj Suri, have written commentaries severally Both of these commentaries have been included in this volume

the first being that by the former, and the second by the latter

In conclusion we take this opportunity of expressing, our deep obligations to Panyas Shree Anandsāgar for reading the proof sheets of the work

Aprill–1911, Zaveri Bazar, Bombay

Naginbhoy Ghelabhoy Zaveri,
A trustee, for himself and
co/— Trustees



तयरत्नत्रयसमाखण्डज्योतिर्द्वारेण द्वादशाङ्गीतीर्थं सकलसुरासुर-नरेश्वरगणोपकारक्षमं विद्वद्वृन्दनमस्यम् । तच्च यावदपश्चिमपूर्व-भृच्छ्रीमद्देवर्द्धिगणिक्षमाश्रमणमपश्चिमानुपमातिशयसाम्राज्यसा-र्वभौमहिमवदाविर्भूतभागीरथीद्वादशाङ्गीतीर्थान्तरगतमपूर्वचमत्का-रचिन्तामणिरोहणायमानमासीदसाधारणमनीषाधारणलब्ध्युपेतमु-निगणधौरेयधृतं पुस्तकगणमृत एव, परं प्रेक्ष्यावसर्पिणीप्रभाव-ह्रसद्धीगणम् मुनिगणमुपकारकरणपटवः पूज्यपादाः सम्मील्याचार्यं पञ्चशतीं वर्त्तमानागमरत्नरत्नाकरोपमा सौराष्ट्रराष्ट्रराजमानायां तत्त्वज्ञानश्रीवलभ्या वलभ्यामुद्भावयामासुः, शासनं विशसित-प्रबलकर्मबलकेतनं पुस्तकारूढ सिद्धान्ततया सर्वसम्मताविस-वादमतीयम्, तदारत एव चासयममयासयतससारपारावारवर्ध-नमपि सयमवर्धनतयोपकरोति पुस्तकवृन्दमहीणामर्हमर्हच्छासन-नभोङ्गणतारारूपाणा मुनिवराणाम्, स्पष्टित च स्पष्टमेतत्स्पष्टतम-वोधकिरणैर्युगप्रधानप्रवरैः श्रीमत्तत्त्वार्थदीपनप्रदीप्रप्रदीपोपमत-त्त्वार्थसार्वदिकसाधुकल्पकल्पनकल्पबृहत्कल्पप्रभृतिपु परमार्थपथ-प्रधानावधारणैरन्यथा तु नाभविष्यदेव सकलजन्तुजातासाधार-णसातवितरणविज्ञपारमार्थिकतत्त्वप्रधानासाधारणाचरणावगमन-ज्योतिरन्तरा विवेकचक्षुरुद्घाटनमैदंयुगीनाना दुष्पमासमयोद्भू-तानेकवाचालकुतिर्थिकवाचालितदिगन्तरालानुपलभ्यदिगवलोका-नाम्, तदन्तरेण च कथङ्कारमभविष्यत्सदाचारसौधसोपाना-रोहोऽप्यारूढानार्यजनप्रवलासङ्गजातप्रवलानार्याचारप्रभावेऽत्र युगे धर्मजिघृक्षाप्यास्ता तावद्दूरादेवानवगतद्रव्यभावानुकम्पाप्रथनप्रत्य-

जैर्योघपभ्रंशभाषाप्रधानत्वात्पूजाकारणप्रवणोपदेशकानाम्, विरलतमीभूतान्येवाधुना सिद्धान्तसाधनसिद्धान्तपुस्तकानि, नातःपरं विघ्नानामस्ति विषादपदमन्यज्जगत्त्रयेऽपि परमवलोक्यैतद्विवेकविलोचनेन स्थापयामास गुर्जरदेशीय श्रीसूरतपत्तनीय गुलावचन्द्राख्यो देवचन्द्रतनुजोऽविगीतसिद्धान्तप्रसाधनपटुप्रसाधितज्ञानदिवाकरश्रीमद्गणभृत्प्रभृतिसकलवाङ्मयवितानविस्तारणलब्धावतारः, स्वतप्तृदेवचन्द्रपादव्यवस्थापितसप्तत्तिसहस्रमानद्रम्मव्यवस्थायां पुस्तकप्रसारणप्रवणान् शेषानपराँस्तत्कार्यवाहकान् जीवनचन्द्र, नगीनचन्द्रादीन्पुरस्कृत्य व्यवस्थाम्, तत्र चानेकतरगूढतत्त्वप्रकाशनप्रभाकरसिद्धान्तलेखनव्यवस्था सतीमप्यनादृत्याल्पपुस्तकप्रसारमात्रजायमानबहुद्रव्यव्ययां झटिति पुस्तकप्रसरणप्रगुणां मुद्रणकलां मुख्यतयाधिचकारः, भगिन्याश्च स्वीयाया [1]विद्युन्मत्या द्रव्य तत्र सम्मील्य समानीय च कलान्तरोपार्जितं चान्यद्द्रविणजातं पूरितं लक्षोन्मितं लक्ष्यं लक्षणविदा, तत्र चादितो मङ्गलाचरणमिव शिष्टाना परममङ्गलभूतमिदमुपचक्रमे मुद्रितुम्, ज्ञानधनैः साधुभिः सशोध्येति प्रस्ताव्य व्यवस्थां प्रस्ताव्यतेऽधुना प्रक्रान्तो ग्रन्थः कर्तृश्रोत्रधिकार प्रमाणादिभि· ।

तत्रावधीयतां तावदवधारणाधीधनैरिदम्, यदुत त्रिधासारोऽस्य विहितनिर्वीराधनमोचनाष्टादशदेशामारिपटहलब्धाकल्पस्थायियशःशरीराः, सार्धत्रिकोटिग्रन्थग्रन्थनलक्षितसर्वज्ञावतारत्व-

---

1 शेठ देवचन्द्रस्य पत्नी वाई नीजकोर । पत्रिमुद्रकर्ता

वितीर्णकलिकालसर्वज्ञविरुदाः, अनवद्यचातुर्विद्यविधानचणात प्रज्ञातिशयप्रभावाऽऽपन्नदेशाधिपतिकुमारपालक्ष्मापालबोधनरमा रिवसाविसपमुनिगणाः श्रीमन्तो भगवन्तो हेमचन्द्राचार्याः, तच्च चैव प्रज्ञागुणमस्यक्ष्मतन्माहात्म्याविघमध्याः सार्धत्रिकोटिमन्थ प्रणेतासम्यमिति पाठमात्रमप्यसमर्थपठीयस्त्वात्तेषाम्, भूयत उपलभ्यते लेखककुण्डस्थानादिविलोकनेन स्पष्टतरं विदुषामरलङ्कि प्रानां चैतत्, सूरिप्रवराश्चैते कदा कतमं भूमण्डलं मण्डयामासुः, कदा च सूर्योस्तमयेनेव रजनीप्रचारमवाप सूरिवरास्तमयेन कुम-तम्पान्तवविविस्तृतिम् कस्मै च योग्यतमाय पुरुषोत्तमाय विद्या येनमर्पयामासुः, कथाधिकारोऽत्र विप्रकृष्टश्चैव आरब्धस्वाप जनक इति प्रवृत्तायां विचारणायाम् निर्णीयते तावत्स्पष्टं स्पष्टि-तत्वात् कुमारपालभूपालः प्राप्नोतु कश्मीरितमिति श्रीमद्वि वादेवसूरिप्रकाशात् कुमारपालक्ष्मापालसमकालीनत्वम्। कुमार-पालभूपालानेदाम गुर्जरभूपपट्टाधिस्थितिविलोकनतो निर्णीयते वैक्रमीयद्वादशशतीयो यतः विक्रमसंवत्सरवस्वधिकैकादशशतमिते राज्याभिषेकस्त्रिंशदधिकद्वादशशतके च तस्य स्वर्गम इति। तथा च सूरिपादसमयोऽप्येष एव। स्वचरणाभ्यासपावितभूमण्डलमिर्य योऽप्यत एव सम्यक्तया ज्ञायत एव, यतः पुण्यतमजन्मनिवासतिर स्कृतविबुधालयविबुधाधर्व श्रीमत्पत्तनपुरमध्यद्वीपोपपदममूल्यरमा र्हेतानां राजर्षिपदव्यलङ्कृतानां श्रीकुमारपालभूपानाम् राज्यसत्ता सम तथा च प्रायेण श्रीमतां गुर्जरधरित्र्यामेव विहारस्तत्र त्यागाग्यपुण्यपुरुषाविताम्तःकरणानामेव च परस्परविरोध-

दुर्गन्धभृद्वाणीवाचकसुरगुरुतिरस्कारिभारतीप्राग्भारभूषितवदनम-लयनिःसृताविरुद्धपरमागमोदितिश्रवणभाग्यमभूदिति, वास्तव्याश्चैते तत्रभवन्तो भगवन्तो गार्हस्थ्ये गुर्जरीयधन्धुकाख्य एव ग्रामे, एतत्प्रभृतिक सविस्तरं वृत्तान्तमुपलभ्य श्रीमता कुमारपालप्रबन्धादिति स्पष्टमेव चोपरिष्टान्निःशङ्कितश्लोकोत्तरार्धविचारणेन प्रकटीभविष्यति यदुत श्रीकुमारपालपावनप्राधान्येन प्रणीतिरस्य, किंवदन्ती चेयं तत्र तदनुसारिण्येव च भणितिरवचूर्णिकाराणामपि वीतरागस्तोत्राणा श्रीविशालराजप्रभूणामवचूर्णौ, यदुतार्हतधर्मप्राप्तिकालादर्वाक् राजर्षिभिः कृतमभूत् यन्मासभक्षण, समयसद्भावे चावगतेऽवबुद्धम् " चउहिं ठाणेहिं नेरइयाउत्ताए कम्मं पगरे " इत्याद्यवगमाद्यवसरे जाताश्वासमप्रगुणपश्चात्तापभाजनं भूपालमौलिमणिलालितपादपीठा राजर्षयो याचितवन्तश्च परमगुरवे प्रायश्चित्तप्रतिपत्तिम्, श्रीमद्गुरुभिश्चावसरोचितं द्वात्रिंशद्दशनभक्षितवान्मामस्य तच्छुद्धये तावन्मिता एवान्वर्थाः समर्पिताः प्रकाशास्तत्र द्वादश तावद्योगशास्त्रीया विंशतिश्चैतदीयाः प्रतिदिनमभ्यस्यैव च ते दन्तान्तःकरणशोधन प्रकाशाना द्वात्रिंश व्यधासीषु भोंजन चक्रुश्चैतेषा यथार्थामभिधा प्रकाशाना, सन्ति चैत एतद्विधा एव, यथावज्ज्ञान चैषामेतद्विधत्वस्य भवेद्यथावत्परिशीलनादेव, पर तत्सिद्धय एवाधिकारदर्शनं निदर्शन मात्रमेव विधीयतेऽस्माभिस्तथा चान्तिम केऽत्राधिकारा इति प्रश्ननिर्वचनमपि भविष्यति स्पष्ट तत्र ।

प्रथमे तावत्प्रस्तावनास्तवे श्रीमद्वीतरागलक्षणमालक्षयन्तः

---

१ श्रीसोमोदयगणिनामवचूर्णौ ।

चैत्यद्रुमं चमरवीज्यमानतां चाग्रतः प्रातिहार्यस्तवे आविर्भावयिष्यन्तीत्युपेक्षितमिद षट्कमिति मन्ये ॥ ४ ॥

पञ्चमे प्रातिहार्यस्तवेऽशोकवृक्षसुरपुष्पवृष्टिदिव्यध्वनिदुन्दुभ्यातपत्रत्रयीचामरसिंहासनभामण्डलान्याख्यन् ख्यातकीर्त्तयो भावार्हन्त्यचिह्नभूतानि ॥ ५ ॥

षष्ठे प्रतिपक्षनिरासस्तवे परमदेवे माध्यस्थ्यमपि दौःस्थ्यनिबन्धनतया निषेध्य प्रतिपक्षस्य रागादिमत्त्व, परेषा योगमुद्रारहिताना त्रातृत्वाभाव मलीमसाचारमुपस्थादिविकारवत्तां चाख्याय रागादिनियुक्ताना देवत्वासम्भव समाचचक्षिरे विचक्षणाः ॥ ६ ॥

सप्तमे जगत्कर्तृत्वनिरासस्तवे निष्कर्मत्वेनाङ्गवदनवक्तृत्वशास्तृत्वाभाव ईश्वरस्य, सदेहत्वेऽपि च न विधाता क्रीडाकृपान्यतराभावाद्दुःखादिविधानादकृपता कर्मजन्ये वैचित्र्ये च नार्थवत्ता, स्वभावस्तु निःसत्ताक एवोत्तरे, ज्ञातृत्वरूपकर्तृत्वे च केवलिना सयोगायोगभिन्नत्वाद्भगवता न विवादः, शासनसाम्राज्यान्तवर्त्तिना च नेय व्याबाधा लेशतोऽपीति प्रतिपादितं सुनिर्णीतसिद्धान्ततत्त्वप्रतिपादनपरैः ॥ ७ ॥

अष्टमेऽनेकान्तप्रकरणस्तवे वस्तुजातस्यानेकान्तमुद्रान्तर्वर्त्तित्व तदभावे कृतनाशाकृतागमौ अनिवार्यौ समन्ततरवः, आत्मनि तु सर्वथा नित्यानित्यतया स्वीक्रियमाणे पुण्यपापयोरभोगो बन्धमोक्षयोरनुपपत्तिश्च, घटादेरपि क्षणिकाक्षणिकैकान्तेऽर्थक्रियाभावो

देहृद्दानानुपार्ज्यसुकृतसङ्गति, भीमकान्तगुणवत्त्वेन साम्राज्यसाधनेऽपि विगतरागद्वेषता, देवत्वेऽपि सकलगुणनिलयता, महीयसां महता महनीयतां महात्मनां गुणवद्दा यथार्थतया ॥ ११ ॥

द्वादशे वैराग्यस्तवे आजन्मवैराग्यवत्तां सुखकारणविषयकवैराग्यवत्तां विवेकशातनिबन्धनमोक्षस्थितवैराग्यता नित्यविरक्ततां मरुन्नरेन्द्रश्र्युपभोगकालरत्यभावं सुखदुःखभवमोक्षविषयकौदासीन्यं परतीर्थिकाभ्युपगताराध्याङ्गीकृतदुःखगर्भमोहगर्भानालीढज्ञानगर्भसगर्भतां सततसम्यगौदासीन्येऽपि विश्वविश्वोपकारितां चाविश्वकुः कोविदचक्रचूडामणयः ॥ १२ ॥

त्रयोदशे हेतुनिरासस्तवे ( विरोधस्तवे ) अनाहूतः सहायोऽकारणो वत्सलोऽनभ्यर्थितः साधुरसम्बन्धो बान्धवोऽनक्तः स्निग्धोऽमृष्ट उज्ज्वलोऽधौतोऽमलशीलोऽचण्डो वीरवृत्तिः, शमी समवृत्तिः कर्मकुटिलकण्टककुट्टकोऽभवो महेशोऽगदो नारायणोऽराजसो ब्रह्मानुक्षितः फलोद्गमोऽनिपातो गरीयानसङ्कलिपतकल्पद्रुरसङ्गो जनेशो,निर्ममः कृपात्मा, मध्यस्थो जगत्त्राताऽगोपितो रत्ननिधिरसूतः कल्पोऽचिन्त्यश्चिन्तामणिर्निखिलेऽपि जगति नान्यो वीतरागाद्भवतोऽपर इति प्राचख्युः प्रख्यातख्यातयो महात्मानः ॥ १३

चतुर्दशे योगसिद्धिस्तवे श्लथत्वेन मनोवाक्कायचेष्टासमाहारान्मनःशल्यवियोगः, करणानां स्वैरप्रचाराभावेन जयोऽष्टाङ्गयोगस्य बाल्यात्सात्मीभावश्चिरपरिचितेषु विषयेषु विरागः, योगेऽदृष्टेऽपि लोलीभावो हिंसकानामुपकार आश्रितानामुपेक्षाप-

वत्पादयोस्त्वत्प्रासादलब्धेयती भूमिर्मयेदानीं मोपेक्षिष्टाः, कृपा-रस्त्व पात्र चासाधारणं कृपाया अर्ह, त्वमतो भव युक्तानुष्ठान-रक इति ॥ १६ ॥

सप्तदशे शरणस्तवे कृतस्वकृतदुष्कृतगर्हासुकृतानुमोदनः शरण यामि, भवतु मिथ्यादुष्कृत मनोवाक्कायजाना कृतादि-भेदाना दुष्कृतानामपुन:क्रियान्वितं रत्नत्रितयगोचरमनुमन्येऽह सुकृतमर्हदादीनामर्हत्त्वादिकमनुमोदयामि, त्वा त्वत्फलभूतान्सि-द्धाँस्त्वच्छासनरतान्मुनींस्त्वच्छासन च शरण प्रपद्ये, सर्वान्सत्त्वा-न्क्षमयामि क्षाम्यन्तु च तेऽस्तु च मैत्री तेपु आपरमपदावाप्तेर्भव शरण ममेति तेनुः शरणक्रियामतथामवितथवादा· ॥ १७ ॥

अष्टादशे कठोरस्तवे शेपापरदेववैलक्षण्य क्रोधलोभभया-क्रान्तजगद्वैलक्षण्यमेव प्रभोर्लक्षणं कृतलक्षणा निरचैषु· कृतलक्षण-तया पर नैतत्ससारकाचकामलिपरिगतानामसुमतामायाति यथार्ह श्रद्धानगोचरे विना सम्यक्त्वाञ्जनम् ॥ १८ ॥

एकोनविंशे आज्ञास्तवे पालनमेवाज्ञाया भगवद्ध्यान नि.श्रे-यस्कर निग्रहानुग्रहकर्त्तृणा परेषा वर्धिन्येव ससारारण्यस्याज्ञा, विगतरागाणामाराधनमचिन्त्यमण्यादितो भवत्येवाभीष्टदं, सपर्या अपि पराज्ञाराधना, तदाराधनविराधननिबन्धनत्वान्निर्वाणा-निर्वाणयो सा चाश्रवसवरयोर्हेयोपादेयतारूपैव, तदाराधकाश्च निर्वाणपथनिभृता अभूवन्भवन्ति भविष्यन्ति ॥ १९ ॥

विद्रे आशीःस्तवे च स्वस्याप्रज कृपा नितरम्बां मूर्मि, मम दृशो श्रामेतो मम्रमनर्देह्यणमर्ब, लुठनैरस्तु क्लिणावलि प्रावश्रिताममसेम्यप्रणामस्य, रोमाञ्चकन्दका श्रमदरोमवासमो गुरुस्तु स्वरास्यपीयूषपानाद्वस्तु मदीयश्रोत्रनाम्नोश्चानां निर्निमेषता मेत्र स्वदीयवदनश्रासिमी, करौ स्वदुपास्तिलसरौ, श्रोत्र स्वद्गुणमहण- परे भवतः सदा, स्वस्स्वस्येतस्यै वाच्ये या सप्रभवद्गुणावगाहमस्य मोमिति स्वीक्रियस्व भद्रासः प्रेष्यः सेवकः किङ्करोऽस्मे इति, इत्येवमनूलप्रतिमामाग्मारवर्णनातिग वगद्गुरु वर्णयामासुरत्र मव म्तोऽत्रेति विज्ञायते ॥ २० ॥

एतत्पर्यवसाने यद्गुरु न सम्यक्षरा भादशा अरपानेके म च दृष्टा परमावश्यकं भद्यापीयूषपीनामां भाज्ञानामेतस्य पठनमिति मुद्रणोपक्रमोऽत्र आगसि मिथ्याकुष्कृत प्रार्थयसे सकलमनम- सत्सेवकः आनन्दाब्धिपरस्तु च सेवकपाठकमुद्रापकाम्बेतृणां, भेयो निःश्रेयसपर्यवसानं बोधिबीजावाप्तिश्चास्त्वेति ।

सिग्धाब्धहेम्युमानेऽब्दे (१९९७)पौषे मास्यसिते दले,
पञ्चम्यां सुरतद्रङ्गे श्रेवसेऽस्तु लिपीकृतः ॥ १ ॥



# ભૂમિકા.

---

**પૂર્વ ગ્રન્થ** — કલિકાલસર્વજ્ઞ–આચાર્ય–ભગવાન્–શ્રીહેમચન્દ્રસૂરીશ્વરજી–કૃત–વીતરાગ–સ્તોત્ર–મૂળ, વિવરણ અને અવચૂરિ સહિત આજથી ૩૭ વર્ષ પૂર્વે "શ્રેષ્ઠિ દેવચંદ લાલભાઇ જૈન પુસ્તકોદ્ધાર ફંડ" તરફથી પ્રકાશિત થયું હતું એનું સંશોધન પ્રાતઃસ્મરણીય–પૂજ્યપાદ–**આગમોદ્ધારક શ્રી સાગરાનન્દસૂરીશ્વરજીએ** પોતાના પ્રૌઢ પ્રતિભાથી કર્યું હતું આ અમોઘ પ્રકાશનદ્વારા ગીર્વાણ–ભારતીના ઉપાસકોને, **કલિકાલસર્વજ્ઞ ભ૦ શ્રી હેમચન્દ્રાચાર્યજી અને પરમાર્હત્ શ્રીકુમારપાલના** સંબન્ધમાં, પોતાના જ્ઞાનક્ષેત્રને વિસ્તૃત કરવાનો સુઅવસર પ્રથમ વાર પ્રાપ્ત થયો તે જ કારણે આ પ્રકાશનની બધી જ પ્રતો પહેલે જ તબક્કે ખલાસ થઇ ગઇ, અને માગણી વધતી જ ગઇ

**આ ગ્રન્થમાં ક્ષતિઓઃ**—એ પછી બીજું પ્રકાશન શ્રી હેમચન્દ્રાચાર્ય જૈન–જ્ઞાનમંદિર–પાટણ તરફથી થયું, પણ એમાં અશુદ્ધિએ સારો એવો ભાગ ભજવ્યો હોવાના કારણે, એ પ્રકાશનની સુરૂપતામાં રહેલી ક્ષતિઓની કદરૂપતા વિદ્વાનોને ખટકયા વગર રહે તેમ નથી

**નવસર્જન**—આવા સંયોગોમાં શેઠ દેવચંદ લાલભાઇ જૈન પુસ્તકોદ્ધારના વ્યવસ્થાપકોને પુનઃ એ ગ્રન્થના પ્રકાશનની સૂચના મળતી ગઇ એ સૂચનાને ધ્યાનમાં લઇને, દે૦ લા૦ ફં૦ ના વ્યવસ્થાપકો, મારા **પરમતારક પૂ૦ ગુરૂદેવશ્રી પં. શ્રી. ચન્દ્રસાગરજી પાસે આવ્યા,** અને આ પ્રકાશન હાથ ધરવા

લખુ એના કરતા, વર્તમાનશ્રુતનામાલિક-ગીતાર્થ-સાર્વભૌમ-પારગત-આગમોદ્ધારક-આચાર્યમહારાજ શ્રી સાગરાનન્દસૂરીશ્વરજીના પુનિત હાથે લખાએલ " શ્રી વીતરાગસ્તોત્રસ્યોપક્રમ " વિદ્વાનો આગળ રજુ કરૂં એ મને વધારે સુયોગ્ય લાગે છે તેથી જ મેં આ ગ્રન્થમા વિસ્તારથી સંસ્કૃત પ્રસ્તાવના લખી નથી

આભાર.—આ ગ્રન્થના સંશોધનમા મારા પૂ. ગુરુદેવ-શ્રીપન્ન્યાસ-પ્રવર-શ્રીચન્દ્રસાગરજી ગણિવર્યશ્રીજીની સહાયતાથી જે મારા સમયનો અને શ્રમનો બચાવ થયો છે, તે બદલ એમના ઉપકારનો આભાર પ્રગટરીતે હુ ન માનું એ મારા માટે ઘોર કૃતઘ્નતા જ કહેવાય, અને તે સાથે અન્ય-સહાયક-સહ-યોગીઓનું વિસ્મરણ કરવુ એ પણ અનુચિત જ કહેવાય; માટે સર્વનો અંત:કરણપૂર્વક ઉપકાર માનીને અત્ર વિરમુ છુ સર્વેનુ કલ્યાણ થાય એજ એક શુભેચ્છા.

| | |
|---|---|
| શીરપુર-પશ્ચિમખાનદેશ<br>જૈન-ઉપાશ્રય | પ્રાતઃસ્મરણીય પૂજ્યપાદ આગમોદ્ધારક-શ્રીઆનન્દસાગરસૂરીશ્વરજીના વિદ્વદ્વિનેય-પન્યાસ-પ્રવર-શ્રીચન્દ્રસાગરજીના ચરણારવિન્દ-સેવક-ચન્દ્રપ્રભસાગરના ધર્મલાભ |





# સાદર સમર્પણ

તપોગચ્છાલંકાર પંજાબકેશરી જૈનાચાર્ય શ્રીમદ્ વિજયવલ્લભસૂરીશ્વરજી કે જેઓએ શેઠ દેવચંદ લાલભાઇ જૈન પુસ્તકોદ્ધાર ફંડના સંશોધન કાર્ય અંગે પંજાબના જ્ઞાન-ભંડારમાંથી અનેક પુસ્તકોની હસ્તલિખિત તેમજ મુદ્રિત નકલો મેળવી આપવા કૃપા કરી છે તે પ્રાતઃસ્મરણીય પુણ્ય પુરુષના કરકમલમાં કલિકાલસર્વજ્ઞ ભગવાન્ શ્રીમદ્ હેમચન્દ્રાચાર્યવિરચિત શ્રી વીતરાગ સ્તોત્રમ્ અમો વિનમ્રપણે સમર્પણ કરતાં આંતરાહ્લાદ અનુભવીએ છીએ.

મુંબઇ
વસંતપંચમી
સં૦ ૨૦૦૮

મોતીચંદ મગનભાઇ ચોકસી
તથા અન્ય માનાર્હ સંચાલકો
શેઠ દેવચંદ લાલભાઈ જૈન પુસ્તકોદ્ધાર
ફંડ-સુરત

# श्रेष्ठी देवचन्द लालभाई जव्हेरी



जन्म १९०९ वैक्रमाब्दे
कार्तिकशुक्लैकादश्या
(देवदीपावली-सोमवासरे)
सूर्यपूरे

निर्याणम् १९६२ वैक्रमाब्दे
पौषकृष्णतृतीयायाम्
(मकरसङ्क्रान्ति-मङ्गवासरे)
मोहमयीनगर्याम्.

नि सा प्रेस, मुंबई

# પ્રસ્તાવના



શેઠ દેવચંદ લાલભાઇ જૈન પુસ્તકોદ્ધાર ફંડમાંથી ગ્રંથાંક ૯૫ તરીકે મૂળ અને સોમોદય ગણિકૃત અવચૂર્ણિ તેમજ શ્રી દેવભદ્રમુનિ શિષ્ય શ્રી પ્રભાનન્દસૂરિકૃત વિવરણ સહિત કલિકાલસર્વજ્ઞ શ્રી હેમચન્દ્રાચાર્યકૃત શ્રી વીતરાગસ્તોત્ર પ્રસિદ્ધ કરવા અમો ભાગ્યશાળી થયા છીએ

આ ગ્રંથનું સંપાદન, સંશોધન તેમજ અનુવાદ આયંબીલ ઓળી તપ અને વર્ધમાન આયંબીલ તપ ઓળીના પરમ આરાધક, વ્યાકરણના અભ્યાસી પરમ, પુનિત આચાર્યશ્રીમદ્ ચન્દ્રસાગરસૂરીશ્વરજીમા પરમ વિનેય શિષ્ય મુનિશ્રી ચન્દ્રપ્રભસાગરજીએ કરી આપેલ હોવાથી અમો તેઓશ્રીના અત્યંત ઋણી છીએ

ગ્રન્થ વિષય અને ગ્રંથકાર સંબંધી સ્વર્ગસ્થ આગમોદ્ધારક શ્રીમદાનન્દસાગરસૂરીશ્વરજીએ તેઓએ લખેલ આ ગ્રંથમાં છપાયેલ પ્રસ્તાવનામાં શ્રમ સેવ્યો હોવાથી અત્રે લંબાણ કરતાં નથી


માખરીયા હાઉસ ૩૨૭,
સરદાર વલ્લભભાઇ પટેલ રોડ
મુંબઇ-૪.
વસંતપંચમી, ૨૦૦૮
તા ૩૧-૧-૧૯૫૨.

લી. મેનેજીંગ ટ્રસ્ટી
**મોતીચંદ મગનભાઇ ચોકસી**
તથા અન્ય માનાર્હ સંચાલકો
શેઠ દે લા જૈ પુ ઉ ફંડ-સુરત.

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितंश्रीमहर्षिप्रथित-
मनुवादावचूर्णिविवरणसमेतम्—

# श्रीवीतरागस्तोत्रम् ।



यः परात्मा परंज्योतिः, परमः परमेष्ठिनाम् ।
आदित्यवर्ण तमसः, परस्तादामनन्ति यम् ॥१॥
सर्वे येनोदमूल्यन्त, समूलाः क्लेशपादपाः ।
मूर्ध्ना यस्मै नमस्यन्ति, सुरासुरनरेश्वराः ॥२॥
प्रावर्त्तन्त यतो विद्याः, पुरुषार्थप्रसाधिकाः ।
यस्य ज्ञानं भवद्भाविभूतभावावभासकृत् ॥३॥
यस्मिन्विज्ञानमानन्दं, ब्रह्म चैकात्मतां[1] गतम् ।
स श्रद्धेयः स च ध्येयः, प्रपद्ये शरणं च तम् ॥४॥
तेन स्यां नाथवाँस्तस्मै, स्पृहयेयं समाहितः ।
ततः कृतार्थो भूयासं, भवेयं तस्य किङ्करः ॥५॥
तत्र स्तोत्रेण कुर्यां च, पवित्रां स्वां सरस्वतीम् ।
इदं हि भवकान्तारे, जन्मिनां जन्मनः फलम् ॥६॥

---

१ ०कात्मता अ

शार्दूलविक्रीडितम् ।

वीरो विश्वविशारदो विनयदो वीरं वरेण्यं भज,
वीरेण स्मरपि स्मयाय विरतिर्वीराय पार्श्वा भवः ।
वीराद् विश्वविराम वरतरं वीरस्य वाग्वैभवः,
वीरे विश्ववरमादिवृन्दविलयो भो वीरः वीरोद्धर ॥१॥

शास्त्री सन्मुखराम कृपाराम ज्योतिषी
सं २००४ माघ सुदि ५, शुक्रवार

अव०—जयति श्रीजिनो वीरः सर्वज्ञः सर्वकामदः ।
यस्याङ्घ्रियुगलं कल्पपादपैर्युग्मजातकम् ॥ १ ॥
नत्वा निजगुरून् सारसारस्वतविभाद्भुतान् ।
वीतरागस्तवान्वर्थं बालगम्यं करोम्यहम् ॥ २ ॥

तथाहि—पूर्वं स्वर्गसहोदरे पत्तननगरे निजसहजपराक्रमाक्रान्तराजचक्रः परमप्रभुतानुकृतशक्रो दुर्द्धरविरोधिसिन्धुरभयकरकरालकरवालो दशदिङ्मण्डलपाखण्डमण्डनकीर्तिव्रततिवितानालवालः प्रजापालः श्रीकुमारपालश्चतुःसागरावधिधात्रीधवतां दधाति स्म । स च कलिकालसर्वज्ञश्वेताम्बरादिषड्दर्शनाखण्डिताज्ञस्वप्रज्ञापराभूतसुरसूरिश्रीहेमसूरिवचनामृतेन गलितमिथ्यात्वगरलः सरलतरश्रीजिनमार्गं प्रतिपन्नवान् । श्रीजिनोक्तनवतत्त्वानि श्रद्दधानः श्रीसम्यक्त्वमूलद्वादशव्रतधुरां दधानः प्रथमव्रतेऽष्टादशदेशेष्वमारिप्रवर्त्तनं मारिशब्दश्रवणेऽपि क्षपणकरणम् । द्वितीये—विपर्ययेणाऽसत्यवचने आचा(मा)म्लम् । तृतीये—प्रतिवर्षं द्विसप्ततिलक्षनिर्वीरधनमोचनम् । चतुर्थे—धर्मप्राप्त्यनन्तर पाणिग्रहणे नियमः, चातुर्मासके त्रिधा शीलपालनम्, भोपलदेव्याद्यष्टभार्यामरणे प्रधानप्रभृतिभिर्बहुकथनेऽपि पाणिग्रहणाऽकरणम् । पञ्चमे—षडष्टौ कोट्यः सुवर्णरूप्ययोः, दशशततोलका महार्घ्यमणिरत्नानां, द्वात्रिंशत् २ सहस्रमणानि घृततैलयोः, त्रीणि २ लक्षाणि शाल्यादिधान्यमूटकानामेकादश शतानि गजानाम्, पञ्चाशत्सहस्रा रथानामेकादशलक्षास्तुरङ्गमानाम्, सर्वसैन्यमीलनेऽष्टादश

जे परात्मा, परज्योति अने परमेष्ठीओमां श्रेष्ठ छे। जेमने पंडित पुरुषो अज्ञाननी पेलेपार गयेला अने सूर्यनी जेवा उद्योत करवावाला माने छे ॥ १ ॥

जेओए रागादि क्लेशरूपी-वृक्षोने मूळथी उखेडी नांख्या छे। जेमने सुर, असुर, मनुष्यना स्वामिओ मस्तकवडे नमस्कार करे छे ॥ २ ॥

जेमनाथी पुरुषार्थने सिद्ध करनारी शब्दादि विद्याओ प्रवर्तेली छे। जेमनु ज्ञान वर्तमान, भावि अने भूत भावोने प्रकाशमारु छे ॥ ३ ॥

जेमनामां विज्ञान-केवळज्ञान, आनन्द-सुख अने ब्रह्म-परमपद, ए त्रणे एकपणाने पामेल छे; ते *श्रद्धेय* छे, अने *ध्येय* छे, *तथा* तेमनु हु शरण अंगीकार करु छु ॥ ४ ॥

तेमना वडे हु समाथ छु, तेमने प्रशान्त मन वाळो हु थांउ छु, तेमनाथी हु कृतार्थ थाउ छु; अने तेमनो हु किंकर छुं ॥ ५ ॥

उपर बतावेल प्रभु विषे स्तुति करवावडे हु मारी वाचाने पवित्र करु छुं। कारण के आ भवरूपी अटवीमां प्रभुनु स्तवन करवुं एज आ जन्मधारि योनां जन्मनु फळ छे ॥ ६ ॥

अव०—जयति श्रीजिनो वीरः सर्वज्ञः सर्वकामदः ।
यस्याङ्घ्रियुगलं कल्पपादपैर्युग्मजातकम् ॥ १ ॥
नत्वा निजगुरून् सारसारस्वतविभाद्भुतान् ।
वीतरागस्तवान्वर्थं बालगम्यं करोम्यहम् ॥ २ ॥

तथाहि—पूर्वं स्वर्गसहोदरे पत्तननगरे निजसहजपराक्रमाक्रान्तराजचक्रः परमप्रभुतानुकृतशक्रो दुर्द्धरविरोधिसिन्धुरभयकरकरालकरवालो दशदिङ्मण्डलपाखण्डमण्डनकीर्तिव्रततिवितानालवालः प्रजापालः श्रीकुमारपालश्चतुःसागरावधिधात्रीधवतां दधाति स्म । स च कलिकालसर्वज्ञश्वेताम्बरादिषड्दर्शनाखण्डिताज्ञस्वप्रज्ञापराभूतसुरसूरिश्रीहेमसूरिवचनामृतेन गलितमिथ्यात्वगरलः सरलतरश्रीजिनमार्गं प्रतिपन्नवान् । श्रीजिनोक्तनवतत्त्वानि श्रद्दधानः श्रीसम्यक्त्वमूलद्वादशव्रतधुरां दधानः प्रथमव्रतेऽष्टादशदेशेष्वमारिप्रवर्त्तनं मारिशब्दश्रवणेऽपि क्षपणकरणम् । द्वितीये—विपर्ययेणाऽसत्यवचने आचा(मा)म्लम् । तृतीये—प्रतिवर्षं द्विसप्ततिलक्षनिर्वीरधनमोचनम् । चतुर्थे—धर्मप्राप्त्यनन्तर पाणिग्रहणे नियमः, चातुर्मासके त्रिधा शीलपालनम्, भोपलदेव्याद्यष्टभार्यामरणे प्रधानप्रभृतिभिर्बहुकथनेऽपि पाणिग्रहणाऽकरणम् । पञ्चमे—षडष्टौ कोट्यः सुवर्णरूप्ययोः, दशशततोलका महार्घ्यमणिरत्नानां, द्वात्रिंशत् २ सहस्रमणानि घृततैलयोः, त्रीणि २ लक्षाणि शाल्यादिधान्यमूटकानामेकादश शतानि गजानाम्, पञ्चाशत्सहस्रा रथानामेकादशलक्षास्तुरङ्गमानाम्, सर्वसैन्यमीलनेऽष्टादश

लक्षाः, अष्टाविंशतिलक्षाः सुभटानाम्, सहस्रयुग्यामशीति सहस्रा गवां, पञ्च २ शतानि गृहापणसमापानपात्रशकटवा हिन्यादीनाम्। षष्ठ–चातुर्मासिक पत्तनपरिसरादधिकदिग्ग तिनिषेध। सप्तमे–मद्यमांसमधुम्रक्षणबहुबीजपञ्चोदुम्बरान न्तकायघृतपूरादिनियमः। अष्टमे–स्वाम्यामप्य सप्तव्यसननि षेधः। नवमे–उभयकालयो प्रतिक्रमणम्, सामायिके गृहीते श्रीहेमसूरिपादान्विनाऽन्येन सहालपनम्। दशमे–वर्षासु कट काकरणम्। एकादशेऽष्टमीचतुर्दश्योः पौषधग्रहणम्, कायोत्सर्गे पादलग्नस्य मर्कोटकस्य दयया स्वत्वचा सह परतःकरणम्। द्वादशे–सीदत्साधर्मिकाणां द्वासप्ततिलक्षकरमोचनम्, प्रतिवर्षं साधर्मिकोद्धारायककोटिदीनारदानम्, पारणकदिने परःशता नामपि दृष्टिप्राप्तश्राद्धानामात्मना सह भोजन इत्यादिनिय मानङ्गीकृत्य प्रभुपार्श्वे प्राक्कृतदुष्कृतप्रक्षालनाय प्रायश्चित्तं प्रार्थितवान्, तेन समयरहस्य हृदि विमृश्य दत्तम्। तथेदं– चतुश्चत्वारिंशदुत्तरचतुर्दशशत १४४४ नव्यप्रासादनिर्मापणम्, षोडशशत १६०० जीर्णोद्धारविधापनम्, सप्त महायात्रा एक– विंशतिर्ज्ञानकोशा इत्यादि। विशेषतो विदितागमस्यमतम ग्रामीणदशनविंशतय एकस्मिन्नेव पीठे दशनसङ्ख्यप्रासादा विधाप्याः। प्रत्यह प्रातस्त्रिंशत्प्रकाशात्म 'काम्' दीप्तौ, प्रक र्षेण काश्यन्ते–दीप्यन्ते आन्तरमलापनयनेन दशना यभिरिति प्रकाशा गुम्फनीया इति च प्रतिपाद्य भावविविधप्रवृत्तिप्ररूपका ग्रन्थ योगशास्त्रस्य, वीतरागभक्तिमया विंशतिश्चामी; श्री

प्रभुभिराम्नाता इति मूलसम्बन्धस्तेषूत्तराणां विंशतेः प्रकाशानामर्थमात्रं लिख्यते । प्रभुश्रीहेमचन्द्रसूरयः शिशुशिष्यशेमुषीविशेषोन्मेषाय प्रथमस्तवे यत्तच्छब्दयोः सप्तविभक्त्येकवचनव्युत्पत्तिं प्रदर्शयन्तो निजभक्तिं प्रकटयन्ति, यथा–

यः परात्मेति० परश्चासावात्मा च परात्मा सर्वसंसारिजीवेभ्यः प्रकृष्टस्वरूपः, पुनः किंविशिष्टः ?,–परंज्योतिः । पर सकलकर्ममलकालुष्यरहितत्वेन केवलं ज्योतिर्ज्ञानमयं यस्य स तथा । परमिति केवलार्थेऽव्ययं, परमे चिदानन्दरूपे पदे तिष्ठन्तीति परमेष्ठिनोऽर्हदादयः पञ्च, तेषां परमः प्रधानभूतः । परमत्वं चास्य मुक्तावस्थामधिकृत्य, परमेष्ठिनामिति षष्ठी "सप्तमी चाविभागे निर्धारणे" इति ( २–२–१०९ ) सूत्रेण । तथा यं वीतरागं तमसः परस्तादामनन्ति ध्यायन्ति तत्स्वरूपोपलब्धये मनीषिणः । क्व ? परस्तात् परस्मिन्पारे, कस्य ? तमसोऽज्ञानरूपस्य, किम्भूतं यम् ? आदित्यवर्णमादित्यस्येव वर्ण उद्द्योतो यस्य तं तथा, भानोरुपमानमन्यस्य तथाविधस्य वस्तुनोऽत्राभावात्, परस्तादिति पठिततमसोऽज्ञानरूपान्धकारस्याग्रे आदित्यवर्णं सूर्याभ तद्विनाशकमित्यर्थः ॥ १ ॥

सर्वे० येन सर्वे समस्ताः क्लेशा रागद्वेषादयस्त एव पादपा वृक्षा नरकादिकटुफलदायित्वेन समूला मिथ्यात्वमूलसहिता उदमूल्यन्त उन्मूलिताः, यस्मै मूर्ध्ना सुरासुरनरेश्वरा नमस्यन्ति–नमस्कुर्वन्ति ॥ २ ॥

प्राप० यतो यत्सकाशाद्विद्याः शब्दविद्यादिकाश्चतुर्दश, धर्मार्थकामादिपुरुषार्थानां प्रमाणिका विधायिकाः प्रावर्तन्त अभूवन्, यद्वा द्वादशाङ्गीगता विद्याः सुवर्णसिद्ध्यादिप्ररूपिकाः । यस्य ज्ञानं भवद्भाविभूतभावावभासकृत्-अतीतानागतवर्तमानवस्तुप्रकाशकमस्तीति गम्यम् ॥ ३ ॥

यस्मिन्० यस्मिन्विशिष्टं ज्ञानं विज्ञानं केवलज्ञानमानन्दमकृत्रिमसुखं ब्रह्म च परमपदं त्रीण्यप्येकात्मतामेकपतानि स एष वीतरागजीवः स एव ज्ञानं ज्ञानैकरूपस्यास्य, स एव च सुखं वचनस्पर्शनादिविषयस्य कस्यापि तत्राभावात्, स एव मुक्तिरूपस्याभावात् । अथ तत्स्वरूपं दर्शयन्त आहुः, स च—स पूर्वोक्तपरात्मादिविशेषणविशिष्टः श्रद्धेयः, स्वहृदयरुचिविषयः कार्यः, च पुनः स ध्येयो रूपातीततया ध्यातव्यस्तं तमसः परस्तादज्ञानात् शरणं प्रपद्ये स्वीकरोमि ॥ ४ ॥

तेन० तेनोन्मूलितक्लेशपादपेन नाथवान् सनाथोऽहं स्यां भवामि, तस्मै सुरासुरनमस्कृतायाहं समाहितस्तदेकध्यानमनाः स्पृहयन्तं वाञ्छामि, ततः प्रकटितपुरुषार्थसाधकविधासकृपया-दहं कृतार्थः कृतकृत्यः प्राप्ताभीष्टकार्यो वा भूयासं भवामि भवि-ष्यामीत्यर्थः । तस्य त्रिकालज्ञानवतः किङ्करो भवेयमस्मि ॥५॥

तत्र० तत्र विज्ञानानन्दब्रह्मरूपं स्वां सरस्वतीं वाणीं, स्तोत्रेण कृत्वा पवित्रां कुर्यां करोमि । को हेतुः ?, हि यस्मा-

त् कारणाद् भवकान्तारे संसारारण्ये जन्मिनां जीवानां, जन्मनः पादपरूपस्य इदमेव वीतरागस्तवनं फलम्, नान्यत् ॥ ६ ॥

ॐ नमः सर्वज्ञाय ।

अनन्तदर्शनज्ञानवीर्यानन्दचतुष्टयम् ।
संस्मृत्य परमात्मानमनाहतमहःश्रियम् ॥ १ ॥
अनल्पमतिभिः साध्यमल्पधीरपि भक्तितः ।
ब्रुवे विवरणं किञ्चिद्वीतरागस्तवानुगम् ॥ २ ॥

इह हि तथाभव्यत्ववैचित्र्यवशप्रशान्तदुरन्तज्ञानावृतितमःसमुल्लसिताद्भुतप्रतिभारम(त्मा)दर्शसङ्क्रान्तसमस्तशास्त्रोपनिषद्भिर्निरवधिनयविक्रमप्रसिद्धसिद्धाधिपश्रीजयसिंहदेवप्रणयप्रश्रिताभिनवशब्दानुशासनैर्विकस्वरविवेकनिस्तन्द्रचौलुक्यचन्द्रपरमार्हतश्रीकुमारपालभूपालमौलिलालितक्रमनखमयूखै प्रवर्तिताद्भुतश्रीजिनराजशासनोन्नतिगलहस्तितातिकलुषदु षमाकालविलसितैरनन्यसामान्यागण्यपुण्यप्रभावभूरिभि' श्रीहेमचन्द्रसूरिभिर्विरचितेषु समस्तस्तुतिरसरहस्यनिस्यन्दपात्रेषु श्रीवीतरागस्तोत्रेषु तावत्प्रथमस्य पदयोजनामात्रमुपक्रम्यते । अत्र च शास्त्रकृतामुद्देशनिर्देशक्रमेणैव शास्त्रविन्यासोऽत' समयपरिपालनाय स्ववदनमात्रतया समस्तस्तवार्थमुद्दिशन् परमात्मानमभिष्टुवन्नाह । य परात्मेति ।

वि०—अत्राद्यसार्द्धश्लोकत्रयस्य पदाना प्रथमादिसप्तम्यन्तविभक्तिप्रथमवचनान्तानामुत्तरश्लोकद्वयस्य तदन्तैरेव पदैर्यथाक्रम कर्तृकर्म्मविवक्षया योजन कार्यम् । नथाहि—परात्मेति विशेष्य पदम्,

सतो य किल परात्मा परंज्योतिः स मद्ध्येय । यश्च परमेष्ठिनां परमः स ध्येय, य आदित्यवर्णं तमसः परस्तादामनन्ति त शरणं प्रपद्ये। येन च समूला सकलक्लेशपादपा समुन्मूल्यन्त तेन नाथवान् स्याम् । यस्मै च सुरासुरनरेश्वरा सरभसं नमस्यन्ति तस्मै समाहित स्पृहयेयम् । यतश्च पुरुपार्थप्रसाधिका विद्याः प्रावर्तन्त तत कृतार्थो भूयासम् । यस्य च भवप्राग्भिमूलभावावभासकत्व ज्ञानं तस्य किङ्करो भवेयम् । यस्मिंश्च विज्ञानमानन्द ब्रह्म चैकात्मता-मुपगत तस्मिन् स्तोत्रेण स्वां सरस्वतीं पवित्रां कुर्यामिति पदानां परस्परसम्बन्धः ।

साम्प्रतमेतदेव प्रतिपद व्याख्यायते । तत्र परश्चासावात्मा च परात्मा, परत्व चास्य देहात्मान्तरात्मापेक्षम्, यत कैश्चिदुपयोग लक्षणमनादिनिधन अपौद्गलिकत्वेन रूपातीत तथाविधसामग्रीसा कल्यात शुभाशुभरूपस्य कर्मण कर्तारमुदयप्राप्तस्य तस्यैव च भोक्तारमस एवैतल्लक्षणविलक्षणाद्देहादपर्यान्तरभूतमविसंवादिप्रमाण प्रतिष्ठितमप्यात्मतत्त्वं महामोहोपहतमतित्वेनामन्यमानै चित्तादि ब्रह्मयोगान्मदशक्तिमिवाचेतनमहाभूतसंपर्कादचेतनस्यमुत्प्राप्य देहस्यैवात्मत्वमुपकल्प्यतेऽत्र स देहात्मा । यथा देहातिरिक्तस्यात्मनः सत्प्रमाणप्रतिष्ठितत्व तथा पुरस्तादस्ममकाशे प्रकाशयिष्यते अन्तरात्मा च ज्ञानावरणादिकर्मनिर्मितमाहात्म्य शरीरी संसारि जीवः । एतयोश्च वक्ष्यमाणविशेषणगणासहत्वेन प्रकृतानुपयोगित्वमत परस्यैवोपादानम् । परात्मा च विगलितसकलकर्ममल-पटलः सम्यक्सिद्धज्ञानदर्शनाऽऽनन्दवीर्यलक्षणामन्तचतुष्टयः शिवम

चलमपूनर्भव परमपदमध्यासीनो ज्ञानदर्शनोपयुक्तः केवलात्मैव । साम्प्रत स एव विशिष्यते किं विशिष्टः परात्मेत्याह—पर ज्योति । अप्रतिपातित्वेन लोकालोकप्रकाशकत्वेन च परं सर्वोत्कृष्ट चित्-स्वरूप ज्योतिर्यस्येति ज्योतिर्ज्योतिष्मतोरभेदात् स एव परज्योति । परत्व चास्य मतिश्रुतावधिमन पर्यायलक्षणचिदंशचतुष्टयापेक्ष, प्रतिपातित्वेनाल्पविषयत्वेन च मत्यादीनामनीदृशत्वात् यदि वा रवीन्दुविद्युन्मणिप्रमुखे निखिलेऽपि ज्योतिवर्गे य परमुत्कृष्ट ज्योतिरिति स परज्योति । यश्चैवविध परात्मा स श्रद्धेय श्रद्धाविषयमवतारणीय इत्युत्तरपदेन योग । किमुक्त भवति । किल यद्यप्यघातिकर्मणामर्हदादीनामध्यक्षे तस्मिंस्तत्प्रत्ययेनैव श्रद्धा विधेयैव । न चानुपकृतपरानुग्रहकृता क्षीणरागद्वेषमोहानामर्हदादीना वितथवादित्वमत किमश्रद्धेय परमात्मन । पुन परमरहस्यभूत परमात्मानमेव विशिनष्टि । परम परमेष्ठिनाम् । परमे चिदानन्दरूपे ब्रह्मणि तिष्ठन्तीति परमेष्ठिनस्ते चार्हदाचार्योपाध्यायसाधव एव, तेषा मध्ये परम प्रकृष्ट सिद्धरूपो य परमेष्ठी, अर्हदादिपरमेष्ठिचतुष्टयस्य चामुक्ततावस्थामधिकृत्य सिद्धस्य पञ्चमपरमेष्ठिन परमत्वम् । मुक्तास्तु सर्वेऽप्येकरूपा एव । स चैवविध परमात्मा भगवांस्तदेकतानमनोभिर्ध्येयस्तत्स्वरूपाप्तये सततमनुस्मरणीय इति उत्तरपदेन सम्बन्ध ।

प्रथमान्तं पदमभिधाय द्वितीयान्तमाह । यं च परमात्मानमणिमाद्यष्टमहासिद्धिप्रसिद्धिमहसो मुनयोऽप्यामनन्ति—तत्स्वरूपोपलब्धये सततमभ्यस्यन्ति । किम्भूतम् ?, तमस परस्ताद् वर्त्तमानम्,

तमांसि निकाचितानि कर्माणि, विमलकेवलाऽऽलोकेन च तेषां पारे प्रतिष्ठित सत्त्वरजस्तमोलक्षणगुणत्रयातीतमित्यर्थः । समहमेवरूपं परमात्मानं दुर्वारान्तरायपरित्याजितात्मशक्ति शरणं प्रपद्ये इत्युत्तरेण योगः । पुनः किंविशिष्टम् ?, आदित्यवर्णं, आदित्यस्य प्रभापतेरिव वर्णः शोभा यस्य स तथा तम् । अत्राह–परः, ननु परिमितक्षेत्रमात्र प्रकाशनमहसा मिहिरेण लोकालोकप्रकाशनप्रवरपरमज्योतीरूपस्य परमात्मनः साम्यमनुपपन्नम् । तथा चागमः –“ चन्दाइच्चगहाणं पहा पयासेइ परिमियं खेत्तं । 'केवलियनाणलम्भो लोयालोयं पयासेइ ” ॥ १ ॥ इति । आचार्य –साधु भो सहृदय ! इदमगममभिदधासि, किन्तु सकलेऽपि कल्पान्तरमुखे तेजस्विवर्गे दिनमणिर स्वामिर्भानोरिव किमपि लघूपमानस्य कामसम्भावनात्मकत्वसमुपलभ्य मित्यादित्यवर्णमित्यभिहितं, तत्त्वतस्तु सुमेरुपरमाण्वोरिव महदन्तरं परमात्मत्वादित्यात्मस्वरूपयोरिति । आदित्योऽपि निरस्ततमस्त्वेन तमसः परस्ताद्भवति ।

तृतीयमन्त्र पदमाह । येन च भगवता परमात्मना क्लेशपाशाः सर्वेऽप्युदमूल्यन्त । “ अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ।”

---

१ केवलिय पुण नाण इति प्रत्यन्तरे ।

पातञ्जले तेन सूत्राणि “ अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । –३ । अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । २–५ । दृग्दर्शनशक्त्योरेकात्मतैवास्मिता । २–६ । सुखानुशयी रागः । २–७ । दुःखानुशयी द्वेषः । २–८ । स्वरसवाही विदुषोऽपि तथाऽऽरूढोऽभिनिवेशः । २–९ ।”

तत्र " अनित्याशुचिदुःखानात्मसु मिथ्याज्ञानमविद्या "। दुर्धराहङ्कारवशात् सर्वत्राऽस्मीतिभावोऽस्मिता "। " मनोज्ञेषु शब्दादिष्वात्मनो गाढाभिष्वङ्गो राग. "। " तेष्वेवामनोज्ञेषु भृशमप्रीतिविशेषो द्वेष. "। " अतत्त्वेऽपीदमित्थमेवेत्येकान्ताग्रहग्रहिलताऽभिनिवेश. "। उपलक्षण चैतदन्यासामपि घातिकर्मोत्तरप्रकृतीनाम्। एते च ससृत्यामात्मनोनादिसबन्धवशाद्बद्धमूला, प्रदर्शिततत्तद्विकारप्ररोहसहतय, स्फुरदाध्यात्मिकाधिभौतिकाधिदैविकवेदनोदयप्रसूनसततय., प्रकाशितामुष्मिकदुर्गदुर्गतिदु खफलपटला, पादपा इव पादपा। ते च सङ्गत्यागादाकेवलोत्पत्ति त्रिजगदप्रतिमल्लहस्तिमल्लेन येन भगवता दुस्तपतपोंदोललनेन (²) चलाचलतामापाद्य शुक्लध्यानसमुद्दण्डशुण्डाग्रेडनेन समूला सहेलमुन्मूलितास्तेन त्रिजगन्नाथेनाहमपि नाथवान् स्या भवेयमित्युत्तरेण योग। येनासौ मामलब्धाना ज्ञानादिगुणाना लम्भनेन तेषामेव च लब्धानां परिपालनाच्चानुगृह्णाति।

चतुर्थ्यन्त पदमाह। मूर्ध्ना यस्मै नमस्यन्ति सुरासुरनरेश्वरा। यस्मै समूलोन्मूलितक्लेशपादपाय भगवते सुरासुरनरेश्वरा देवदानवमानवपतय. सकलक्लेशजालोच्छित्तिनिमित्त मूर्ध्ना उत्तमाङ्गेन सरभस नमस्यन्ति। तस्मै त्रिभुवनसनातनगुरवे समाहितस्तदेकतानमानसोऽहमपि स्पृहयेय, प्रणामादिनिमित्त स्पृहामावहामीत्युत्तरेण सम्बन्ध। इदमुक्त भवति। किल यद्यपि सुरासुरेश्वरादिवत् प्रत्यक्षार्हत्प्रणामादिसामग्री दुःषमासमयसमुद्भूतस्य ममासभविनी तथापि

१ अध्यात्ममधिभूतमधिदैवश्च, त्रिविध दु.खम्।

"मनोरथानामगतिर्न विद्यते" इति न्यायात् स्पृहामात्रमपि तावद्वि-
रचयामि येन सदभ्यस्ततया भवान्तरेऽपि संस्कारोऽयमनुवर्तत इति ।

पञ्चम्यन्तं पदमाह । प्रावर्तन्त यतो विद्या पुरुषार्थप्रसाधिका । यतो यस्मात्त्वत्तः परमपुरुषात् पुरुषार्थानां धर्मार्थकाममोक्षलक्षणानां प्रसाधिकास्तदुपायोपदर्शिन्यो विद्या शब्दविद्यादिका प्रावर्तन्त प्रादुरासन् । यतो द्वादशाङ्गीसूत्रनीवीमुत्पादादित्रिपदीं तदुचितेषु भगवान् स्वयमुदीरयति । न च द्वादशाङ्गीव्यतिरिक्तमन्यदपि विद्याङ्गमस्तीत्यतः समस्तविद्यानां भगवानेव प्रभव । अत एव तस्मात्तस्मात् परमपुरुषानुध्यानादहमपि पुरुषार्थोपलब्ध्या कृतार्थः कृतकृत्यो भूयासमित्युत्तरेण योग । पुरुषार्थोपायोपलब्ध्या च कृतकृत्यता समीचीनैवेति ।

षष्ठ्यन्तं पदमाह । यस्य ज्ञानं भवद्भाविभूतभावावभासकृत् । यस्य भगवतः परमात्मनो घातिकर्मणामात्यन्तिकक्षयादुत्पन्नं ज्ञानं देशकालस्वभावविप्रकर्षैरनन्तरितमत एव भवद्भाविभूतभावावभासकृत् वर्तमानानागतातीतपदार्थसार्थप्रकटनपटिष्ठम् । तस्यैवम्भूतस्याहं किङ्करो भवेयमित्युत्तरेण योग । अयमाशय । किमस्मिन् जगति यस्य विसंवादित्वेनानैकान्तिकोऽप्याज्ञनिमित्तमात्रावभासनपरो ज्ञानांशः स्यात् सोऽपि तदर्थिभिः मेध्यैरिव प्रतिक्षणमुपास्यते । यस्य च भगवतः भानुप्रकाशितस्वरूपं ज्ञानं तस्य किङ्करत्वमनुत्तरसुरा अपि कुर्युः किमङ्ग मादृशोऽल्पभागिति ।

सप्तम्यन्तं पदमाह । यस्मिन् विज्ञानमानन्दं ब्रह्म चैकात्म-

(त्म)ता गतम् । यस्मिंश्च भगवति परमपरमेष्ठिनि विज्ञानमानन्दं ब्रह्म चैकात्मता गतम् । तत्र मत्यादिज्ञानेभ्य क्षायिकत्वेनाप्रतिपातित्वेनानन्तद्रव्यपर्यायगोचरत्वेन च विशिष्ट केवलालोकलक्षण ज्ञानं विज्ञानम् । आनन्द चात्मनः कदाप्यलब्धपूर्वस्वरूपलाभसमुद्भवमितरकारणकलापनिरपेक्षमनुपाधिमधुरमक्षयमात्यन्तिकं सुखमेव । ब्रह्म च परम पद, यदा च भवोपग्राहिकर्मपारवश्यादद्यापि भवस्थ· केवली भवति तदास्मिन् भगवति केवलिनि विज्ञानमानन्द च वर्त्तते । अय च परमपद गमिष्यतीत्यात्मविज्ञानानन्दब्रह्मणा मिथ. पृथग्भाव स्यादेव । शैलेश्यनन्तर च सकलकर्मांशप्रक्षयादक्षय पदमुपेयुष्यस्मिन् विज्ञानमानन्द ब्रह्म चैकात्मता याति स एव परमात्मा, स एव विज्ञानम् स एवानन्द , स एव परम ब्रह्मेत्यभिन्नभावता भजते । अतस्तत्र तस्मिन् पूर्वोपवर्णितस्वरूपे परमात्मनि स्तोत्रेण यथार्थवादेनाह स्वामात्मीया सरस्वतीं वाणीं पवित्रां पावनीं कुर्याम्–विदध्यामित्युत्तरेण सबन्ध । ननु किमस्याः प्रथम किमस्यपूतत्वमस्तीत्युच्यते । स्वकर्मपरिणामेनाभ्यावृत्त्या भवे बभ्रम्यमाणाना प्रबलज्ञानावरणोदयाद्विशिष्टचित्तचैतन्यशून्यानामसुमतामसुलभैव कवित्ववक्तृत्वसरसा सरस्वती, यदा च तथाभव्यत्ववैचित्र्यात् सघटितापि भवाभिनन्दिना सुरनरादीनामसद्भूतगुणोद्भावनेनात्मान मलिनयति, तदा परमात्मप्रभृतिस्तुत्यवर्गस्तुतिप्रयोगमन्तरेण किमन्यदघर्षणमस्यास्ततः तत्र स्तोत्रेणेत्युक्तम् । किञ्च अस्मिन् भवकान्तारे ससारारण्ये जन्मिना सत्क्षेत्राद्येकादशाङ्गीसगतस्य जन्मनोऽवतारस्यापीद सद्भूत वस्तुतत्त्वोद्भावनमेव फलम् ।

साम्प्रत स्तुतिकृद्वीतरागस्तवविधानेऽसमर्थतामयनेनात्मनो निरहङ्कारतामुद्भावयमाह ।

**क्वाहं पशोरपि पशुर्वीतरागस्तवः क्व च ।**
**उत्तितीर्षुररण्यानीं पद्भ्यां पङ्गुरिवास्म्यतः ॥७॥**

**पशुथी पण पशु एवो हु क्या ?, अने सुरगुरुथी पण अशक्य एवी वीतरागनी स्तुति क्या ?, ए कारणे बे पग वडे मोटी अटवीनु उल्लंघन करवाने इच्छता पगुनी जेवो हु छु ॥ ७ ॥**

अथ प्रभव आत्मनो गर्वपरिहारं कुर्वन्तो वदन्ति—क्वाह—क्व अहं पशोरपि पशु सर्वविचारबाह्यः च पुनः क्व वीतरागस्तवः सुरगुरुणाप्यशक्यानुष्ठान , अतः कारणादहं पङ्गुरिव पद्भ्यां पादाभ्यामरण्यानीमटवीमुत्तितीर्षुः उल्लिल ङ्घयिषुरस्मि ॥ ७ ॥

क्वासावो महदन्तरे, क तावदहं । किं विशिष्ट ? पशोरपि पशु । किल यथावस्थितवीतरागस्वरूपोद्भावनपरस्तुतिविधर्मे छद्मस्था सकलवाङ्मयपारावारपारगामिनोऽपि पशव इव पशवः । अहं तेषु मीनकतिपयग्रन्थार्थमात्राभ्यासतमितस्तेभ्योऽप्यतिहीनत्वेन पशोरपि पशु । क्व च कायवाङ्मनसामगोचरचरितस्यात एव वास्तोष्पतिस्तो मैरपि यथावत् स्तोतुमशक्यस्य भगवतः श्रीवीतरागस्य स्तवः । अतो मत्पशोरपि पशुरहं वीतरागस्तोत्रं चिकीर्षुस्तत्पङ्गुरिव महदरण्य

पद्भ्यामुत्तरीतुमिच्छुरस्मि। किमुक्तं भवति–यथा पङ्गोः पद्भ्यामरण्यानीपरपारगमनमसुकरमेव ममापि परमात्मस्तुतिप्रथनमिति ।

यद्येव किमात्मशक्त्यननुरूपेणानेनैवोपक्रमेत्याह ।

**तथापि श्रद्धामुग्धोहं नोपालभ्यः स्खलन्नपि ।**
**विशृङ्खलापि वाग्वृत्तिः श्रद्दधानस्य शोभते ॥८॥**

**तो पण श्रद्धाथी मुग्ध एवो हुं प्रभुनी स्तुति करवामां स्खलना पामवा छतां उपालम्भने पात्र नथी. श्रद्धाळु आत्मानी संबध विनानी वाक्यरचना पण शोभाने पामे छे ॥ ८ ॥**

पुनः कारणान्तरं विमृश्य स्तवोद्योगं दर्शयन्ति–तथा० तथापि निर्विचारत्वे सत्यपि श्रद्धामुग्धो वासनाप्रेरितस्वान्तोऽहं स्तवने स्खलन्नपि स्वल्पमतितया गुणानन्त्यं प्रकटयितुमशक्नुवन्नपि नोपालभ्यः, मूर्ख[1]! मा वदेति न निराकार्यः। यतः कारणात् श्रद्धधानस्य श्रद्धावतो विशृङ्खलाऽसम्बद्धापि वाग्वृत्तिर्वचनरचना शोभते ॥ ८ ॥

तथाप्येव सत्यप्यहमस्मिन् वीतरागस्तवाध्वन्यध्वनीनतामाकलयन्नविकलसामर्थ्यशून्यः स्थाने २ स्खलन्नपि विमलमतिभिर्नोपालभ्यः। यत परमात्मप्रतिबद्धस्तुतिश्रद्धया मुग्धः शक्यार्थविचारचातुर्यवर्जितः, एवविधस्य च श्रद्दधानस्य निरुपाधिश्रद्धाबन्धबन्धु-

---

१ मूर्खोऽय मूर्खोऽयमिति प्रत्यन्तरे ।

रान्त करणस्य वाग्वृत्तिर्वचनपद्धतिर्विग्रहाऽपि पूर्वापरसम्बन्धविरहं वादविसंस्थुलापि भक्तिव्यतिरेकात्सतया शोभते बालकालपचापलमिव कौतुक च जनयतीति समञ्जसम् ।

इति श्रीवीतरागस्तोत्रे प्रथमस्य प्रस्तावनास्तवस्य पद्ययोजना ।

श्रीहेमचन्द्रप्रभवाद्वीतरागस्तवादितः ।
कुमारपालभूपालः प्राप्नोतु फलमीप्सितम् ॥९॥

श्री हेमचन्द्रसूरिए रचेला आ श्रीवीतरागस्तवथी श्रीकुमारपाल-भूपाल श्रद्धा-विशुद्धिलक्षण अने कर्मक्षय लक्षण इच्छित फलने प्राप्त करो (९)

आद्युक्तसम्बन्धं प्रथयन्त प्रोचुः-श्रीहेम० इतः प्रस्तुतात् श्रीहेमचन्द्रविरचितादीतरागस्तवात् कुमारपाल भूपाल ईप्सितं दर्शनविशुद्धिलक्षणं फलं कर्मक्षयमित्यर्थः । प्राप्नोतु-समासादयतु ॥ ९ ॥

इति प्रथमप्रकाशाऽवचूर्णि ॥



साम्प्रत स्तुतिकृत्प्रस्तावनास्तवोपवर्णितस्य परमात्मनो भावा र्हतप्रभा प्रागवस्थामभिहितस्य चतुर्स्त्रिंशदतिशयान् प्रकाशचतुष्टयेन विभणिषुर्द्वितीयप्रकाशे चतुर सहजातिशयान् मस्तावयत्नादौ सक-लनरशरीरविलक्षण भगवत शरीरातिशय श्लोकचतुष्टयेनाह । —

**प्रियङ्गुस्फटिकस्वर्णपद्मरागाञ्जनप्रभः ।**
**प्रभो! तवाधौतशुचिः, कायः कमिव नाक्षिपेत् ॥१॥**

अनु०-हे प्रभो! प्रियंगुनी जेम नील, स्फटिकनी जेम उज्ज्वल, स्वर्णनी जेम पीळो, पद्मरागनी जेम रातो अने अंजननी जेम श्याम कान्तिवाळो अने धोया विनाज पवित्र एवो आपनो देह कोने आश्चर्य-चकित न करे? (१)

अव०-अथ सहजातिशयचतुष्टयं व्यावर्णयन्ति-प्रिय० हे प्रभो! तव कायो देहोऽधौतशुचिरक्षालितपवित्रः, कं सुरनरादिकं नाक्षिपेत्, नोत्कण्ठितं कुर्यात्, अपि तु सर्वमपि, इवोऽवधारणे, किम्भूतः कायः?, प्रियङ्गुर्नीलवर्णो वृक्षः, स्फटिकस्वर्णे प्रतीते, पद्मरागो रक्तमणिः, अञ्जनं कज्जलम्, तद्वत्प्रभा कान्तिर्यस्य स तथा। यतः "पउमाभवासुपुज्जा० १, वरकणय० २" इत्यादि, पञ्चपरमेष्ठिरूपतया वा वीतराग-देहस्य पञ्चवर्णत्वम् ॥ १ ॥

वि०-हे प्रभो! विश्वस्वामिन्नासता तावत्तव शरीरस्था शरच्छशधरकरनिकरानुकारिणो गुणास्त्रिजगद्विलक्षणार्हल्लक्षणापास्तसमस्तप्रत्यवाय. कायोऽपि कमिव नाक्षिपेत्! अविज्ञाततत्त्वस्यापि प्रथममक्षिसन्निपातेनैव कस्य नाम नाद्भुतरसवासितमन्त.करणं कुर्यादपितु सर्वस्यापि विदध्यादेव। किंविशिष्ट'?, पियङ्गुस्फटिकस्वर्ण-

पद्मरागाञ्जनप्रभ , प्रियङ्गुश्च स्फटिकं च स्वर्णं च पद्मरागश्चाञ्जनं चैतेषा-
मिवप्रभा । तत्र प्रियङ्गु फलिनीलता, स्फटिकं रवीन्दुकान्तम्, स्वर्णं
चामीकरम् पद्मरागः शोणमणि, अञ्जनं कज्जलं तस्येव प्रभा यस्य
स तथा । भवन्ति हि तथाविधनामकर्मवैचित्र्याद्भगवतामर्हतामेषु
पञ्चापि वर्णास्ततः सर्वेषामुपादानम् । पुनः किंविशिष्ट !, अधौत
शुचिरप्रक्षालितनिर्मलं , किल सलिलादिप्रक्षालनेनाशुचीन्यपि वपूंषि
क्षणमात्रोक(कत)मन्ति शुचिताम् । भगवतस्त्वङ्गे निसर्गसिद्धं नैर्म
ल्यम् । एवंविधश्च काय कस्य नाम न लोचनलोभनं विदध्यादिति ।

मन्दारदामवन्नित्यमवासितसुगन्धिनि ।
तवाङ्गे भृङ्गतां यान्ति, नेत्राणि सुरयोषिताम् ॥२॥

अनु०–कल्पतरुना पुष्पोनी मालानी जेम स्व
भावथी ज सुगन्धि एवा आपना शरीरने विषे
देवांगनाओनां नेत्रो भ्रमरपणाने पामे छे (२)

अव०–मन्दार० हे वीतराग ! मन्दारदामवत् कल्पद्रुम
पुष्पमालावन्नित्य सर्वदापि अवासाऽकृत्रिमपरिमलकलिते तवाङ्गे
शरीरे सुरयोषितां देवाङ्गनानां नेत्राणि–नयनानि भृङ्गतां
भ्रमरभावं यान्ति–भजन्ति। "स्त्रीणामक्ष्णां कटाक्षाणां भृङ्गत्वा
श्यामताऽधवेति " वचनाद्भृङ्गत्वारोपणम् ॥ २ ॥

वि०–हे भुवनभूषण प्रभो ! तवाङ्गे सुरयोषितां नेत्राणि
भृङ्गतां यान्ति स्वच्छशरीरेऽमराङ्गनाअवलोकनानि भ्रमरविभ्रमं

धारयन्ति । कथम्भूते ? नित्यमवासितसुगन्धिनि घनसारागरुमृगमद-मलयजादिगन्धद्रव्यैरवासितेऽपि स्वभावसुरभिण्यत एव नित्यपदोपादानम् । उपाधिजनितो हि वास. कतिपयकालकलावसाने विलीयत एव, भगवदङ्गे तु निसर्गत. सौरभ्यमुभगम् । अत्रोपमामाह-मन्दारदामवद् अङ्गे कस्मिन्निव मन्दारदामनीव । एतदुक्त भवति-यथा सुरतरुसुमनःस्रजि पुष्पन्धयधोरणय समज्यन्ते एवमर्हच्छरीरे सुरसीमन्तिनीनयनानि । अमररमणीनयनक्षोभगणनाच्च मर्त्यपातालललनालोचनक्षोभ सामर्थ्यलभ्य एव भगवद्देह इति । किञ्च—

**दिव्यामृतरसास्वादपोषप्रतिहता इव ।**
**समाविशन्ति ते नाथ ! नाङ्गे रोगोरगव्रजाः ॥३॥**

**अनु०-हे नाथ ! दिव्य अमृतरसना आस्वादनी पुष्टिथी जाणे पराभव पाम्या न होय तेम कासश्वासादिक रोगरूपी सर्पना समूहो आपना शरीरने विषे प्रवेश पामता नथी. ( ३ )**

अव०-दिव्या० हे नाथ ! ते तवाङ्गे देहे रोगाः कासश्वासादयस्त एवोरगाः सर्पास्तेषां व्रजाः-समूहाः न समाविशन्ति -नोपद्रवन्ति, यतः किम्भूता दिव्या० बाल्ये देवैरङ्गुष्ठेऽमृतं सञ्चारितं दिव्यममृतं तस्य रसस्तस्यास्वादस्तेन पोषो वर्द्धनं तेन प्रतिहताः पराङ्मुखीकृता इव, इवोपमायाम् ॥ ३ ॥

वि०-हे विहितदुर्दान्तमन्मथप्रमाथ नाथ ! तवाङ्गे रोगोरग-

मना न समाविशन्ति । तत्र रोगा राजयक्ष्मादयस्त एव निर्झरमर्म-
हेतुत्वेन दुर्वारदारुणवेदनोत्पादकत्वेन च उरगा इव उरगास्तेषां व्रजा-
समूहा ध्वस्तोत्तरप्रसरत्वादामयानामस्ते तथाभूते तव वपुषि न
समाविशन्ति—न प्रविशन्ति । किं विशिष्टा इव दिव्येत्यादि दिव्यो
मानवो योऽसावमृतरस पीयूषद्रवस्तस्यास्वादः पानं तस्माद् योऽसौ
सौहित्यं तेन प्रतिहता इव गजहस्तिता इव । इदमत्र हृदयम्—तथा-
स्वभावादेव तावद् भगवतामर्हतामशान्यशेषव्याधिवैधुर्यवर्जितान्येव
वपूंषि च स्थिते स्तुतिकृदुत्प्रेक्षते । किञ्च बाल्ये जननीस्तन्यपाना-
नधिकारित्वेन यदेषां कराङ्गुष्ठे अमर्त्यपतय पीयूषरसं संचारयन्ति ।
तत्पानप्रतिहता इव न तदङ्गे रोगभुजङ्गमाः समाविशन्ति । सद्यु
चितप्रायमृतपानादामयाशीविषविकारविश्लेष इति । तथा—

स्वय्यादर्शतलालीनप्रतिमाप्रतिरूपके ।
क्षरत्स्वेदविलीनत्वकथाऽपि वपुषः कुतः ? ॥४॥

अनु० दर्पणना तलमां अंदर प्रतिबिंबित थयेला प्रतिबिंबनी जेम स्वच्छ एवा आपने विषे शरीरथी झरता परसेवाथी चीगळीजवापणानी कथा ज क्यांथी होय ? ( ४ )

अव०—त्वय्या० त्वयि आदर्शतलालीनप्रतिमाप्रति
रूपके दर्पणतलप्रतिबिम्बितरूपमच्छऽपरं मलादि दूर, क्षरत्स्वे
दविलीनत्वकथा स्रवत्स्वेदाङ्गिमत्ववार्तापि वपुषश्शरीरस्य

कुतः श्रमप्रश्वसादेः स्यादित्यभ्याहार्यमिति प्रथमातिशय-श्चतुर्भिः श्लोकैः ॥ ४ ॥

वि०–हे भगवस्त्वद्वपुषस्तवातुल्यकल्याणगेहस्य देहस्य क्षरत्स्वेदविलीनत्वकथापि कुतः । तथाविधतरणितापादिसम्पर्कतः क्षरत्स्यन्दमानो य. स्वेदो घर्मजल तस्माद्विलीत्व पिच्छिलत्व तस्यास्तां तावदनुभव' कथापि वार्त्तापि कुतः सर्वथैवासम्भविनीत्यर्थः । कथम्भूते त्वयीत्याह । आदर्शतलालीनप्रतिमाप्रतिरूपके, आदर्शो दर्पणस्तस्य तल मध्य तस्मिन्नालीना प्रतिबिम्बिता या प्रतिमा देहप्रतिच्छन्दस्तत्प्रतिरूपके तदनुकारिणि । किमुक्त भवति–यथा मुकुरसङ्क्रान्तस्य रूपस्य भीष्मग्रीष्मोष्मादिसान्निध्येऽपि स्वेदविलीनत्व न स्यादेव निसर्गत एव भगवदङ्ग इति । एव च प्रियङ्गुस्फटिकेत्यादिना निरुपचरिताद्भुतरूपत्वं, मन्दारदामेत्यनेन स्वभावसुरभित्व, दिव्यामृतेत्यनेन निसर्गनीरोगत्व, त्वय्यादर्शेत्यनेन स्वाभाविक स्वेदमलोन्मुक्तत्वमभिदधानेन स्तुतिकृता श्लोकचतुष्टयेन भगवत सहजातिशयेषु प्रथमो देहातिशय' प्रोक्त. । साम्प्रत श्लोकद्वयेन द्वितीय सहजातिशयमाह—

**न केवलं रागमुक्तं, वीतराग ! मनस्तव ।**
**वपुःस्थितं रक्तमपि, क्षीरधारासहोदरम् ॥ ५ ॥**

अनु०–हे वीतराग ! केवल आपनुं मन रागरहित छे ?, एम नथी; आपना शरीरमां रहेलुं रुधिर पण (रागना अभावथी) दूधनी धारा जेवुं उज्ज्वल छे.(५)

मघा न समाविशन्ति। तत्र रोगा रागमक्माद्यस्त एव निर्भरभय-हेतुत्वेन दुर्वारदारुणवेदनोत्पादकत्वेन च उरगा इव उरगास्तेषां मघाः समूहा ध्वजोपरसवसमस्वादामयानामसत्से तवाङ्गे तव वपुषि न समाविशन्ति—न प्रविशन्ति। किं विशिष्टा इव दिव्येत्यादि दिव्योऽमानवो योऽसावमृतरस पीयूषद्रवस्तस्यास्वाद पान तस्मात् पोषः सौहित्यं तेन प्रतिहता इव गरुदस्तिता इव। इदमत्र हृदयम्—तथा स्वभावादेव तावद् भगवतामर्हतामङ्गान्यशेषव्याधिवैधुर्यवर्जितान्येव स्फुरेवं च ज्ञायते स्तुतिकृदुत्प्रेक्षते। किञ्च बाल्ये जननीस्तन्यपाना-नधिकारित्वेन यदेषां कराङ्गुष्ठे अमर्त्यपतय पीयूषरसं सञ्चारयन्ति। तत्पानप्रतिहता इव न तवाङ्गे रोगभुजङ्गमाः समाविशन्ति। सद्भ चितमामृतपानादामयाशीविषविकारनिक्षेप इति। तथा—

स्वय्यादर्शतलालीनप्रतिमाप्रतिरूपके।
क्षरत्स्वेदविलीनत्वकथाऽपि वपुषः कुतः ? ॥४॥

अनु० दर्पणना तलमां अंदर प्रतिबिंबित थयेला प्रतिबिंबनी जेम स्वच्छ एवा आपने विषे शरीरथी झरता परसेवाथी पीगळीजवापणानी कथा ज क्यांथी होय ! (४)

अव०—त्वय्या० त्वयि आदर्शतलालीनप्रतिमाप्रति रूपक दर्पणतलप्रतिबिम्बितरूपमदसऽपरं मलादि दूर, क्षरत्स्वे दविलीनत्वकथा सवत्स्वेदक्लिन्नत्ववार्तापि वपुषः शरीरस्य

**कुतः श्रमभाञ्जसादेः स्यादित्यध्याहार्यमिति प्रथमातिशय-श्चतुर्भिः श्लोकैः ॥ ४ ॥**

वि०–हे भगवस्त्वद्वपुषस्तवातुल्यकल्याणगेहस्य देहस्य क्षरत्स्वेदविलीनत्वकथापि कुतः । तथाविधतरणितापादिसम्पर्कतः क्षरत्स्यन्दमानो य स्वेदो घर्मजल तस्माद्विलीत्व पिच्छिलत्व तस्यास्तां तावदनुभव. कथापि वार्त्तापि कुतः सर्वथैवासम्भविनीत्यर्थः । कथम्भूते त्वयीत्याह । आदर्शतलालीनप्रतिमाप्रतिरूपके, आदर्शो दर्पणस्तस्य तल मध्य तस्मिन्नालीना प्रतिबिम्बिता या प्रतिमा देहप्रतिच्छन्दस्तत्प्रतिरूपके तदनुकारिणि । किमुक्त भवति–यथा मुकुरसङ्क्रान्तस्य रूपस्य भीष्मग्रीष्मोष्मादिसानिध्येऽपि स्वेदविलीनत्व न स्यादेव निसर्गत एव भगवदङ्ग इति । एव च प्रियङ्गुस्फटिकेत्यादिना निरुपचरिताद्भुतरूपत्वं, मन्दारदामेत्यनेन स्वभावसुरभित्व, दिव्यामृतेत्यनेन निसर्गनीरोगत्व, त्वय्यादर्शेत्यनेन स्वाभाविक स्वेदमलोन्मुक्तत्वमभिदधानेन स्तुतिकृता श्लोकचतुष्टयेन भगवतः सहजातिशयेषु प्रथमो देहातिशय प्रोक्त. । साम्प्रत श्लोकद्वयेन द्वितीय सहजातिशयमाह—

**न केवलं रागमुक्तं, वीतराग ! मनस्तव ।**
**वपुःस्थितं रक्तमपि, क्षीरधारासहोदरम् ॥ ५ ॥**

**अनु०–हे वीतराग ! केवल आपनुं मन रागरहित छे ?, एम नथी; आपना शरीरमां रहेलुं रुधिर पण (रागना अभावथी) दूधनी धारा जेवुं उज्ज्वल छे.(५)**

अय०–द्वितीय दर्शयन्ति–म के० हे वीतराग ! केवल मेक तव मनश्चित्तं रागमुक्तं रागेण संसारमूर्च्छया रहितं नास्ति, वपुःस्थितं रक्तमपि रुधिरमपि क्षीरधाराग्रहोदरं दुग्धधाराधवलं रागमुक्तमित्यर्थः ॥ ५ ॥

वि०–हे वीतराग ! भगवंस्तम 'वीतराग' इत्यन्वर्थेन नाम्न यत्र पटहघोषेण न सर्वत्र निरङ्कुशं प्रसर्पता मनसो गतरागत्व सुप्रसिद्धमेव, केवलं न खलु तव मनोऽन्तःकरणमेव रागमुक्तं वि आसिक्तवर्जरहित, किन्तु वपु स्थित देहाभ्यन्तर्गत रक्तं शोणितमपि रागमुक्तं लौहित्योज्झितमत एव क्षीरधारामहोदरं दुग्धदुग्धत्र मसिमम् । इयमत्र भावना–सहजातिशयमहिम्नैव भगवद्वपुषि क्षीर धाराधवलं शोणितं, परं रागनिमदामहिम विगमस्येव भगवन्त मन्तश्चकितेनेव किल रक्तेन रागस्तस्य इति । किञ्च—

जगद्विलक्षणं किं वा, तवान्यद्वक्तुमीश्महे ? ।
यदविस्रमबीभत्सं, शुभ्रं मांसमपि प्रभो ! ॥६॥

अनु०–अथवा हे प्रभो ! जगतथी विलक्षण एवुं आपनुं बीजुं वर्णन करवा अमे समर्थ थई शकीए ?, कारण के आपनुं मांस पण दुर्गन्ध विनानुं तथा दुगंच्छा विनानुं उज्ज्वल छे ( ६ )

अव०–जग० हे वीतराग ! वाऽथवा तव जगद्विलक्षणं जगता सुरनरादिभिःदृष्ट ...

जासङ्ख्यसुराखण्डलपादलुठनादिकं किं वक्तुं–वदितुं ईश्महे-समर्था भवामः ?, अपि तु न भवामः; यद्यस्मात् कारणाद् हे प्रभो ! तव मांसमप्यविस्रमकलुषमबीभत्समजुगुप्सनीयं शुभ्रं गोदुग्धधारानुकार्यस्ति ( इति ) द्वितयेन द्वितीयः ॥ ६ ॥

वि०–हे प्रभो ! भुवनाधिनाथ ! भगवस्तव जगद्विलक्षण जगदसामान्यमन्यद्रूपलवणिमवलकलाकौशलदानध्यानज्ञानादिकं गुणगण वय स्तोतार. सम्भूयापि किं कियन्मात्र वा वक्तु वर्णयितु-मीश्महे–समर्था भवाम । यद्यस्मात्त्वद्देहधातुषु यन्मास-पिशित तदपि जगद्विलक्षणम् । तथाहि–मास विस्र बीभत्सं लोहित च भवति, तव तु तदप्यविस्रमदुर्गन्धि परमपरिमलाढ्यमबीभत्समजुगुप्सनीयं शुभ्र डिण्डीरपिण्डपाण्डुरमतस्तव देहधातवोऽपि यदि जगदसामान्यास्तत्किमिवान्यल्लोकोत्तरं (न) भविष्यतीतिभाव । तृतीय सहजातिशयमाह—

**जलस्थलसमुद्भुताः, संत्यज्य सुमनःस्रजः ।**
**तव निःश्वाससौरभ्यमनुयान्ति मधुव्रताः ॥७॥**

अनु०–जल अने स्थलने विषे उत्पन्न थयेला पुष्पोनी माळाओनो त्याग करीने भ्रमरो आपना निकळता श्वासनी सुगंध लेवाने माटे आपनी पाछळ आवे छे. ( ७ )

अव०–जल० हे वीतराग ! जलस्थलसमुद्भूता जल-

जासङ्ख्यसुराखण्डलपादलुठनादिकं किं वक्तुं-वदितुं ईश्महे-समर्था भवामः ?, अपि तु न भवामः; यद्यस्मात् कारणाद् हे प्रभो ! तव मांसमप्यविस्रमकलुषमबीभत्समजुगुप्सनीयं शुभ्रं गोदुग्धधारानुकार्यस्ति ( इति ) द्वितयेन द्वितीयः ॥ ६ ॥

वि०-हे प्रभो ! भुवनाधिनाथ ! भगवस्तव जगद्विलक्षण जगदसामान्यमन्यद्रूपलवणिमवलकलाकौशलदानध्यानज्ञानादिक गुणगण वय स्तोतार' सम्भूयापि किं कियन्मात्र वा वक्तु वर्णयितु-मीश्महे-समर्था भवाम । यद्यस्मात्त्वद्देहधातुषु यन्मास-पिशित तदपि जगद्विलक्षणम् । तथाहि-मास विस्र बीभत्स लोहित च भवति, तव तु तदप्यविस्रमदुर्गन्धि परमपरिमलाढ्यमबीभत्समजुगुप्सनीयं शुभ्र डिण्डीरपिण्डपाण्डुरमतस्तव देहधातवोऽपि यदि जगदसामान्यास्तत्किमिवान्यल्लोकोत्तरं (न) भविष्यतीतिभाव । तृतीय सहजातिशयमाह—

जलस्थलसमुद्भुताः, संत्यज्य सुमनःस्रजः ।
तव निःश्वाससौरभ्यमनुयान्ति मधुव्रताः ॥७॥

अनु०-जल अने स्थलने विषे उत्पन्न थयेला पुष्पोनी माळाओनो त्याग करीने भ्रमरो आपना निकळता श्वासनी सुगंध लेवाने माटे आपनी पाछळ आवे छे. ( ७ )

अव०-जल० हे वीतराग ! जलस्थलसमुद्भूता जल-

**अव० लोको० हे वीतराग ! तव भवस्थितिस्तीर्थकर-जन्ममर्यादा लोको० लोकशब्देन लोकमध्यस्थिता हरिहरादि-देवा ज्ञायन्ते तेभ्य उत्तीर्णस्तैः कदाचिन्न कृत इति लोकोत्तरः स चासौ चमत्कारश्च तत्करणशीला । यतः-कारणात्तवाहारनी-हारौ भोजनोत्सर्गविधी चर्मरूपाणि चक्षूंषि येषा ते (तथा) तेषां मनुष्याणामित्यर्थः, न गोचरो-न विषयो-न दृश्यत इति तात्पर्यमाविष्टलिङ्गत्वादेकवचनं गोचर इति ॥ ८ ॥**

वि०—हे सर्वाद्भुतनिधान ! भगवस्तवाखिलकर्मक्लेशजालसमूलो-न्मूलनादपुनर्भवस्थितिस्तावच्चमत्कारकारिण्येव किन्तु सकललोकसा-धारणी भवस्थितिरपि लोकोत्तरचमत्कारकरी अलौकिकाश्चर्यकारिणी, यतो जन्मन प्रभृति निर्वृतिपदप्राप्तिपर्यन्त तवाहारनीहारौ गोचरौ चर्मचक्षुषा विशिष्टज्ञानलोचनशून्याना न गोचरो न विषय न केनापि चर्मचक्षुषा तवाहारनीहारौ दृश्येते इति । अत्र च नाहार-नीहारौ गोचरौ चर्मचक्षुषामिति प्राप्ते विशिष्टबन्धचारुत्वनिमित्तमा-विष्टलिङ्गत्वाद् विभिन्नवचनतेत्यदोषः । इयता च "देह विमलसु-अधं, आमयपस्सेयवज्जिय रूव । रुहिर गोक्खीराभ, निव्विस्सं पण्डुर मस ॥ १ ॥ आहारा नीहारा, अदिस्सा मसचक्खुणो सयय। नीसासो अ सुअधो, जम्मप्पभिई गुणा एए ॥ २ ॥" इत्यादि-ऋषिभाषितस्य सवाद ।

इति श्रीवीतरागस्तोत्रे द्वितीयस्य सहजातिशयवर्णनस्तवस्य पदयोजना ।



स्यसोद्भूताः सुमनःसमाः-कुसुममालाः सन्त्यज्य-विमुच्य तव निःश्वाससौरभ्य-वदनामोद मधुव्रताः-भ्रमरा अनुयान्ति-अभिमुखीभवन्तीति तृतीयः ॥ ७ ॥

वि०-हे जगदप्रमेयमहिमन् ! स्वामिंस्तव निःश्वाससौरभ्य मुखानिलपरिमलं मधुव्रताः-षट्पदाः समन्ततोऽनुयान्ति सरभस-मनुसरन्ति । यदि पुनस्तत्र मधुरतरपरिमलकलितमन्यत्कुसुमादि भविष्यतीत्याह-सन्त्यज्य विहाय, का ? सुमन सम प्रसूनमालाः । किंविशिष्टा ? जलस्थलसमुद्भूता जले स्थले च प्रादुर्भूता, तत्र पुण्डरीककमलकुवलयकुमुदादया सलिलसमुद्भवास्तिलकचम्पकाशोककेतकबकुलमालतीपाटलादयाश्च स्थलसमुत्था । न च परिमलविशेषविचारे मधुकरीकेभ्योऽप्यपरे चञ्चुरास्ततस्तेऽपि यदि सुमनःसम सन्त्यज्य त्वन्मुखामोदमनुसरन्ति ततस्तस्यैव समस्तपरिमलवस्तुषु परमाग इति । अत्र च यद्यपि प्रमिताम्येव कुसुमानि सकृचन्द्रामिधेयानि तथाप्यत्यन्तसहृदत्वेन सुमनसां सम इव सम इत्यतोयः । चतुर्थं सहजातिशयमाह—

लोकोत्तरचमत्कारकरी तव भवस्थितिः ।
यतो नाहारनीहारौ, गोचरश्चर्मचक्षुषाम् ॥ ८ ॥

अनु० आपनी भवस्थिति-संसारमां वसवापणु लोकोत्तर चमत्कार-अपूर्व आश्चर्यने पेदा करनारुं छे, कारण के आपना आहार अने नीहार चर्मचक्षु वाळाओने अगोचर-अदृश्य छे (८)

त्रि०-हे प्रणयप्रणमदमरनाथ नाथ ! यदेतदेतद्वक्तुमुपक्रान्त स एष सकलोऽपि तवैव योगसाम्राज्यमहिमेति कुलकप्रान्त्येन श्लोकेन सम्बन्ध । किं तदित्याह-यत्त्व सर्वथा सम्मुखीनो विष्वग्विस्त्वरेण केवलालोकरोचिषा सर्वतोमुखस्तिर्यग्नरामरादिलक्षणाः प्रजाः प्रतिक्षणमानन्दयसि-परमानन्दमेदुरान्तःकरणा करोषि । कुत. पुनरिद सर्वतोमुखत्व प्रभोरित्याह-तीर्थकृन्नामकर्मजात् परमार्हन्त्यसहचरितात् सर्वाभिमुख्यत -सर्वाभिमुख्यत्वातिशयात् । अयमाशय.-किल सुप्रभूणा स्वाभिमुख्यमगण्यपुण्यप्राप्य, तच्च तथाविधशुभसम्भारवशोद्भवमपि द्वित्राणा पञ्चषाणा वा भवति । त्व तु युगपत्कोटिसंख्या अपि तिर्यग्नरामरादिकाः पितेव स्वाः प्रजा समदृष्ट्या शश्वदानन्दयसीत्यहो तव योगसाम्राज्यमहिमेति । अत्र च केचित्सर्वाभिमुख्यता भगवतो देशनावसरचतुर्मुखतामाहुस्तस्याश्च सुरकृतत्वेन सुरकृतातिशयेषु पुरस्ताद्भणिष्यमाणत्वात् कर्मक्षयजातिशयेष्वमीषु भणन न सङ्गतिमङ्गति । तथा—

**यद्योजनप्रमाणेऽपि, धर्मदेशनसद्मनि ।**
**संमान्ति कोटिशस्तिर्यग्नृदेवाः सपरिच्छदाः ॥२॥**

**अनु० एक योजन प्रमाण एवी पण धर्मदेशनानी भूमिने विषे पोतपोताना परिवार सहित क्रोडो तिर्यंच, मनुष्य अने देवताओ समाई जाय छे. (२)**

**अव० यद्यो०** हे वीतराग ! यद्योजनप्रमाणेऽपि चतुर्गव्यूतमात्रेऽपि -धर्मदेशनसद्मनि समवसरणे तिर्यग्नृदेवाः

एवं स्तुतिकृत् स्वामिनः सहजातिशयमाममिधाय साम्प्रतं तस्यैव सर्वविरतिमतिपत्तेरनन्तरं तीव्रतरतपःपवनमस्तुरदुर्धरशुक्लध्यानधनञ्जयभस्मीकृताशेषघातिकर्मेन्धनस्य सद्य समुद्भूतानेकातिशयातिशयों स्तृतीयप्रकाशेनाह—

सर्वाभिमुख्यतो नाथ !, तीर्थकृन्नामकर्मजात् ।
सर्वथा सम्मुखीनस्त्वमानन्दयसि यत्प्रजाः ॥१॥

अनु० हे नाथ ! जे कारण माटे तीर्थकरनाम कर्म जनित ' सर्वाभिमुख्य ' नामना अतिशयथी, केवळज्ञानमां प्रकाशवडे सर्वथा सर्व दिशाए सन्मुख रहेला एवा आप, देव मनुष्यादि सर्व प्रजाने सर्व प्रकारे आनंद पमाडो छो ( १ )

अथ० कर्मक्षयजातिशयान् विशेषयन्त आहुः–सर्वा० हे नाथ ! तीर्थकृन्नामकर्मजात् नामकर्मण एकाशीतितमभेदात्तीर्थकरनामकर्मणो जातात् सर्वाभिमुख्यतः सर्वतः सर्वासु दिक्षु सम्मुखत्वात् परमार्हन्त्यपदवीसहचरितात् सर्वाभिमुख्यतातिशयात् सर्वथा सम्मुखीनः केवलालोकतोऽपि सर्वतामुखस्त्वं प्रजा नरामरादिका यदानन्दयसि–प्रीणयसि । तीर्थकरा हि सर्वतः सम्मुखा एव न तु पराङ्मुखाः क्वापि, यदिति वक्तुमुपक्रान्त एकादशश्लोकैः स एष सर्वोऽपि तवैव योगसाम्राज्यमहिमेति द्वादशश्लोके सम्बन्धः ॥ १ ॥

त्रि०–हे प्रणयप्रणमदमरनाथ नाथ! यदेतदेतद्वक्तुमुपक्रान्त स एष सकलोऽपि तवैव योगसाम्राज्यमहिमेति कुलकमान्त्येन श्लोकेन सम्बन्ध । किं तदित्याह–यत्त्व सर्वथा सम्मुखीनो विष्वग्विसृत्वरेण केवलालोकरोचिषा सर्वतोमुखस्तिर्यग्नगमरादिलक्षणा प्रजाः प्रतिक्षणमानन्दयसि–परमानन्दमेदुरान्त करणा. करोषि । कुत पुनरिद सर्वतोमुखत्व प्रभोरित्याह–तीर्थकृन्नामकर्मजात् परमार्हन्त्यसहचरितात् सर्वाभिमुख्यत –सर्वाभिमुख्यत्वातिशयात् । अयमाशय.–किल सुप्रभूणा स्वाभिमुख्यमगण्यपुण्यप्राप्य, तच्च तथाविधशुभसम्भारवशोद्भवमपि द्वित्राणा पञ्चषाणा वा भवति। त्व तु युगपत्कोटिसंख्या अपि तिर्यग्नरामरादिकाः पितेव स्वाः प्रजा समदृष्ट्या शश्वदानन्दयसीत्यहो तव योगसाम्राज्यमहिमेति । अत्र च केचित्सर्वाभिमुख्यता भगवतो देशनावसरचतुर्मुखतामाहुस्तस्याश्च सुरकृतत्वेन सुरकृतातिशयेषु पुरस्ताद्भणिष्यमाणत्वात् कर्मक्षयजातिशयेष्वमीषु भणन न सङ्गतिमङ्गति । तथा—

**यद्योजनप्रमाणेऽपि, धर्मदेशनसद्मनि ।**
**संमान्ति कोटिशस्तिर्यग्नृदेवाः सपरिच्छदाः ॥२॥**

**अनु० एक योजन प्रमाण एवी पण धर्मदेशनानी भूमिने विषे पोतपोताना परिवार सहित क्रोडो तिर्यंच, मनुष्य अने देवताओ समाई जाय छे. (२)**

**अव० यद्यो०** हे वीतराग! यद्योजनप्रमाणेऽपि चतुर्गव्यूतमात्रेऽपि धर्मदेशनसद्मनि समवसरणे तिर्यग्नृदेवाः

तिर्यञ्चो गजादयः, नरा नरेन्द्रादयः, सुराः-सुरेन्द्रादयः, सपरिच्छदाः-सपरिवाराः कोटिशः-बहुकोटिमिताः संमान्ति-बाधारहितमुपविशन्ति ॥ २ ॥

वि०-धर्म सर्वदेशसंयमलक्षणो देशसंयमभेदः सम्यग् दिश्यते यत्र तद्धर्मदेशनसद्म । तच्च भगवत सुरासुरजनित त्रिभुवनाभरणं समवसरणमेव, तस्मिंश्च यतिर्यग्नरामरा युगपत्सम्मान्ति परस्पराबाधेन सुखं निषीदन्ति, यदि पुनस्ते स्वल्पा एव भविष्यन्तीत्याह-कोटिशः कोटिसङ्ख्या । तावन्तोऽपि कदाचिदेकमात्रसहाया एव स्युरित्याह । सपरिच्छदाः-सपरिवाराः-स्वस्वपरिवारोपेता, तर्हि देशनासद्म योजनशतादिविस्तीर्णं भविष्यतीत्याह । योजनप्रमाणेऽपि जम्बूद्वीपमात्रविस्तारेऽपि तथैतावत्यपि क्षेत्रे कोटिसङ्ख्या सपरिवाराश्च तिर्यग्नरामरा युगपन्निराबाधं सम्मान्ति । स सकलोऽपि तवैव योगसमृद्धिसमुदय इति । किञ्च—

तेषामेव स्वस्वभाषापरिणाममनोहरम् ।
अप्येकरूपं वचनं, यत्ते धर्मावबोधकृत् ॥ ३ ॥

अनु०-पोतपोतानी भाषामां परिणाम पामी जवावाळु होवाथी मनोहर एवु एक सरखु पण आपनु वचन तेओने धर्मनो अवबोध करनारु थाय छे (३)

अव०-तेषां० हे वीतराग ! यत्ते तवैकरूपमप्येकरूप एकभाषया उक्तमपि वचनं, तेषां नराणां तिर्यग्म्लेच्छानामपि

**स्वस्वभा० निजनिजवाक्तया श्रवणेन रम्यं धर्मावबोधकृत्पुण्यप्ररूपकं भवति ॥ ३ ॥**

व्रि०—हे विश्वजनीन ! यत्ते तव वचन धर्मावबोधकृद् धर्मसम्बोधकारण, केषां तेषामेव समवसरणोपनताना तिर्यग्नरामराणाम् । किंविशिष्ट ?, स्वस्वभाषापरिणाममनोहरं तेषा तिर्यग्नरादीना या स्वा स्वा आत्मीयात्मीया भाषा जात्यनुगुणा तद्रूपेण यत्परिणमनं परिणामस्तेन मनोहरं हृदयहारि । पठन्ति च—" देवा दैवीं नरा नारीं शवराश्चापि शावरीं । तिर्यञ्चोऽपि हि तैरश्ची मेनिरे भगवद्गिरम् ॥ १ ॥ " इति यद्येव भगवद्वचनमपि तावद्रूप भविष्यतीत्याह अप्येकरूप एकरूप पञ्चत्रिंशद्गुणोपेतधर्ममागधस्वरूपमपि । यच्चैवविधेनायोजनविसर्प्पिणा सर्वभाषापरिणतेनैकरूपेणापि वचनेन युगपत्सर्वतिर्यग्नरामराणा धर्मावबोधकृत्तत्तवैव योगसमृद्धिविलसितमिति । अन्यच्च—

**साग्रेऽपि योजनशते, पूर्वोत्पन्नाः गदाम्बुदाः ।**
**यदञ्जसा विलीयन्ते, त्वद्विहारानिलोर्मिभिः ॥४॥**

**अनु०—आपना विहाररूपी पवननी लहरीओवडे सवासो योजनने विषे पूर्वे उत्पन्न थयेला रोगरूपी वादळाओ तत्काळ विलय पामी जाय छे. ( ४ )**

**अव०—साग्रे० हे वीतराग ! यत्तव विहारानिलोर्मिभिः पादावधारणसमीरणकल्लोलैरग्र चतुर्थभागः साग्रेऽपि सपञ्चवि-**

तिर्यञ्चो गजादयः, नरा नरेन्द्रादयः सुराः–सुरेन्द्रादयः,सपरिच्छदाः–सपरिवाराः कोटिशः–बहुकोटिमिताः संमान्ति–बाधारहितमुपविशन्ति ॥ २ ॥

वि०–धर्म सर्वदेशसंयमलक्षणो दशप्रकारमेदः सम्यग् दिश्यते यत्र तद्धर्मदेशनसद्म । सद्म भगवतः सुरासुरजनित त्रिभुवनाभरणं समवसरणमेव, तस्मिंश्च यत्तिर्यग्नरामरा युगपत्सम्मान्ति परस्पराबाधेन सुखं निषीदन्ति, यदि पुनस्ते स्वल्पा एव भविष्यन्तीत्याह–कोटिशः कोटिसङ्ख्या । यावन्तोऽपि कदाचिदल्पमात्रसङ्ख्या एव स्युरित्याह । सपरिच्छदाः–सपरिवाराः–स्वस्वपरिवारोपेताः, तर्हि देशनासद्म योजनशतादिविस्तीर्णं भविष्यतीत्याह । योजनप्रमाणेऽपि जम्बूद्वीपसमान्नविस्तारेऽपि यत्रैतावत्स्वपि क्षेत्रे कोटिसङ्ख्याः सपरिवाराश्च तिर्यग्नरामरा युगपन्निराबाधं सम्मान्ति । स सकलोऽपि तवैव योगसमृद्धिसमुद्‌गम इति । किञ्च—

तेषामेव स्वस्वभाषापरिणाममनोहरम् ।
अप्येकरूपं वचनं, यत्ते धर्मावबोधकृत् ॥ ३ ॥

अनु०–पोतपोतानी भाषामां परिणाम पामी अवाबालु होवाथी मनोहर एवुं एक भरत्तु पण आपनु वचन तेओने धर्मनो अवबोध करनारु थाय छे ( ३ )

अव०–तेषां० हे वीतराग ! यत्ते तवैकरूपमप्येकस्य एकभाषया उक्तमपि वचनं, तेषां त्रयाणां तिर्यग्नरदेवानामेव,

शलभाः; शुकास्तिस्र ईतयो भूमौ भुवि नाविर्भवन्ति--न प्रकटीभवन्ति इव यथाऽनीतयोऽन्यायाः क्षितिपक्षिप्ता राज्ञा निरस्ताः क्षणेन वेगेन दूरीभवन्ति ॥ ५ ॥

वि०-साग्रेऽपि योजनशते इत्यनुवर्तते। यच्चैतावति क्षेत्रे त्वयि विहरति भूमावीतयो नाविर्भवन्ति--न प्रादुर्भवन्ति । किंरूपा इत्याह-मुषकाः शलभा. शुका' मूषकशलभशुकरूपाः सकलसस्यसम्पद्वि-लोपनप्रवणा. । का इव ?, अनीतय इव । यथा क्षितिपेन धर्मविज-यिना राज्ञा क्षणेनोत्पत्तिसमनन्तरमेव क्षिप्ता' पर्यस्ता अनीतयो-ऽधर्माचरणानि भूमौ नाविर्भवन्ति तद्वद्भुवनबान्धवविहारादीतय इत्यहो त्वद्योगगरिमा ।

स्त्रीक्षेत्रपद्रादिभवो, यद्वैराग्निः प्रशाम्यति ।
त्वत्कृपापुष्करावर्त्तवर्षादिव भुवस्तले ॥ ६ ॥

अनु०-आपनी कृपारूपी पुष्करावर्त्तना मेघनी वृष्टिथीज जाणे नहि तेम ज्यां आप चरण धरो छो त्यां स्त्री, क्षेत्र अने नगरादिथी उत्पन्न थयेलो वैर-रूपी अग्नि शमी जाय छे. ( ६ )

अव०-स्त्रीक्षे० हे वीतराग ! यत् स्त्रीक्षेत्रपद्रादिभवो वैराग्निर्वैरदहनो भुवस्तले प्रशाम्यति, इवोत्प्रेक्षायाम् । त्वत्कृपा० तव कृपारूपपुष्करावर्त्तः सर्वोत्कृष्टो मेघविशेषस्तद्व-र्षाद्वृष्टेरिव ॥ ६ ॥

प्रविरोमनप्रतेऽपि, पूर्वोत्पन्नाः प्राग्जाताः उपलक्षणादप्रपन्ना सान् यावद्भुत्पित्सवोऽपि गदाम्बुदाः–रोगमेघाः अञ्जसा–वेगेन सामस्त्यन वा विलीयन्ते–क्षयं यान्ति ॥ ४ ॥

वि०–गदा रोगास्त एव प्रथमभणवोऽपि तथाविधसामर्थ्य श्रुनात् प्रसमरा अम्बुदा इवाम्बुदास्ते तव विहारस्सद्विहार स एव-प्रतिबद्धत्वेनानिल इवानिलस्तदूर्मिभिरञ्जसा सामस्त्येन यद्विलीयन्ते विलय यान्ति। कात्म्यमभिमाह–किंविशिष्टा गदाम्बुदा ! पूर्वोत्पन्ना भगवद्विहारात् प्रथममुद्भूता । इदमुक्तं भवति–भगवद्विहारेण वर्षार्धात् प्रथमोत्पन्ना व्याधयो विधूयन्ते, वर्षार्धे च भावकपीना न प्रभवन्ति । क्षेत्रामभिमाह–सामेऽपि योजनशत इति, सह श्रमेण वर्तेत इति साम, तत्र तयोजनशत च यञ्चविंशत्यधिके योजनशत इत्येदस्यर्थात् । समुचितमानिकोर्मिभिरम्बुदविलयो भवेतदेव तत्र वैव योगसमृद्धिविजृम्भितमिति । किञ्च—

नाविर्भवन्ति यद्भूमौ, मूषका शलभाः शुकाः ।
क्षणेन क्षितिपाक्षिप्ता, अनीतय इवेतय ॥ ५ ॥

अनु०–राजाओथी दूर करायेली अनीतिओनी जेम भूमिमां मूषक–उंदर, शलभ–तीड, अने शुक–पोपट विगेरना उपद्रवो क्षणवारमां नाबूद थइ जाय छे अने नवीन उत्पन्न पण थता नथी ( ५ )

अव०–नावि० हे वीतराग ! यत् त्वयि विहरति मूषकाः,

शलभाः; शुकास्तिस्र ईतयो भूमौ भुवि नाविर्भवन्ति—न प्रकटीभवन्ति इव यथाऽनीतयोऽन्यायाः क्षितिपक्षिप्ता राज्ञा निरस्ताः क्षणेन वेगेन दूरीभवन्ति ॥ ५ ॥

वि०—साग्रेऽपि योजनशते इत्यनुवर्तते। यच्चैतावति क्षेत्रे त्वयि विहरति भूमावीतयो नाविर्भवन्ति—न प्रादुर्भवन्ति। किंरूपा इत्याह-मुषका. शलभा· शुकाः मूषकशलभशुकरूपाः सकलसस्यसम्पद्धि-लोपनप्रवणा। का इव ?, अनीतय इव। यथा क्षितिपेन धर्मविज-यिना राज्ञा क्षणेनोत्पत्तिसमनन्तरमेव क्षिप्ता पर्यस्ता अनीतयो-ऽधर्माचरणानि भूमौ नाविर्भवन्ति तद्वद्भुवनबान्धवविहारादीतय इत्यहो त्वद्योगगरिमा।

स्त्रीक्षेत्रपद्रादिभवो, यद्वैराग्निः प्रशाम्यति।
त्वत्कृपापुष्करावर्त्तवर्षादिव भुवस्तले ॥ ६ ॥

अनु०—आपनी कृपारूपी पुष्करावर्त्तना मेघनी वृष्टिथीज जाणे नहि तेम ज्यां आप चरण धरो छो त्यां स्त्री, क्षेत्र अने नगरादिथी उत्पन्न थयेलो वैर-रूपी अग्नि शमी जाय छे. ( ६ )

अव०—स्त्रीक्षे० हे वीतराग ! यत् स्त्रीक्षेत्रपद्रादिभवो वैराग्निर्वैरदहनो भुवस्तले प्रशाम्यति, इवोत्प्रेक्षायाम्। त्वत्कृपा० तव कृपारूपपुष्करावर्त्तः सर्वोत्कृष्टो मेघविशेषस्तद्व-र्षाद्वृष्टेरिव ॥ ६ ॥

वि०-यथास्मिन् भुवस्तले त्वयि विहरति सावनयतान्ववैरामिः मशाम्यति । वैरं-विरोध स एव स्वपरयोरुपतापकारित्वेनाग्निरिवाग्नि, किंविशिष्ट ?, जीवेऽपणादिभव, क्षिप्रः कामिन्या, क्षेत्र भि सस्योत्पत्तिभूमय, पत्राणि ग्रामनगरादीनां सन्निवेशस्तु मत्यः, आदिसम्बन्धात् कौटुम्बिकादिपरिग्रहः, एभ्यो भव उत्पत्तिर्यस्य स तथा । यथस्यैव श्रीममुतिभ्यो रामरावणपाण्डवकौरवादीनामिव कुक्षेऽस्थितिविनिशन्मनो वैरानुबन्ध तथा पैवविभोऽपि यशाम्यति । यशमहेतुमाह-त्वत्कृपेत्यादि, तव सम्बन्धिनी कृपा त्वत्कृपा सर्वसत्त्वसाधारणी कारणनिरपेक्षा करुणा सैव भगवन्मुखासजीवातुत्वेन पुष्करावर्त इव, तस्य वर्षेण वर्षतस्मादिव । इदमत्र हृदयम्-किल काष्ठादिसङ्घर्षसमुद्भवो वह्निः सामान्यपर्जन्यधारासारमात्रेणैवोपशाम्यति, अस्य च दुर्धरवैरानुबन्धभवनाग्नस्त्वत्कृपापुष्करावर्त्तावर्षिते क इवायः प्रशमोपाय इति । अवैतदेवं स तवैव योगसम्पत्परमागः । अन्वय—

त्वत्प्रभावे भुवि भ्राम्यत्यशिवोच्छेदडिण्डिमे ।
सम्भवन्ति न यन्नाथ ?, मारयो भुवनारयः ॥७॥

अनु०-हे नाथ ! अशिवनो उच्छेद करवाने डिंडिमनाद समान आपनो प्रभाव भूमि उपर फेलाये छते भुवनना दुश्मनभूत मारी-मरकी विगेरे उपद्रवो उत्पन्न थता नथी (७)

अव०-त्वत्प्र० हे नाथ ! परमप्रभावेऽचिन्त्यमाहात्म्ये

भुवि भ्राम्यति प्रसरति सति, भुवनारयोऽनिष्टत्वेन जगद्वैरि-रूपा मारयो दुष्टव्यन्तरशाकिन्यादिजनिता न सम्भवन्ति-नोत्पद्यन्ते। यतस्त्वत्प्रभावे किं विशिष्टे ?, अशि० अशिवाना-मुपद्रवाणामुच्छेदो विनाशनं तत्र डिण्डिमे—पटहसदृशे । अन्योऽपि यश्चौरादिरुच्छेद्यते स पटहवादनेन सकललोक-समक्षं, विशेषणरूपो हेतुः ॥ ७ ॥

वि०—हे कृपापाथो(धो) नाथ ! यच्चास्या भुवि योजनशतान्त-रमारय क्रूरग्रहदुष्टभूतमुद्गलशाकिन्यामयादिजनितान्यकालमरणानि न सम्भवन्ति सम्भावनामात्रमपि तदीय नोपपद्यते। किं विशिष्टा मारयो ?, भुवनारय. भुवनजननिर्निमित्तशत्रवः । क सति ?, तव जगद्विलक्षणाक्षीणशुभलक्षणखनेः प्रभावे माहात्म्ये भ्राम्यति निर-ङ्कुश प्रसरति। कथम्भूते ?, अशिवोच्छेदडिण्डिमे अकल्याणनिर्वा-सनपटुपटहे। अशिवरूपाश्च मारय' इत्ययमपि निरवग्रहस्तवैव योगसमृद्धिगरिमेति । अपरञ्च ॥ ७ ॥

**कामवर्षिणि लोकानां, त्वयि विश्वैकवत्सले ।**
**अतिवृष्टिरवृष्टिर्वा, भवेद्यन्नोपतापकृत् ॥ ८ ॥**

अनु०—लोकोना कामितने वर्षावनार विश्वने उपतापने विषे अद्वितीय वत्सल एवा आप विद्यमान छते अतिवृष्टि के अनावृष्टि थती नथी. ( ८ )

अव०–षष्ठिकटाक्षनयेन वैरमारिद्वय प्रसाध्यत्वादस्य देवस्थितत्वाच्च प्रथम निरस्य, अपमीतिचतुष्टयमयमाह–

काम० हे वीतराग ! त्वयि विश्वै० निष्कारणवत्सले परे लोकानां काम० मनोभीष्टदायिनि विश्वपित्यतिवृष्टि- वृष्टिरावृष्टिरवर्षणं योपतापकृत् सन्तापकारिणी यम भवेत् ॥ ८ ॥

वि०—यत्र विमलकेवलालोकभास्वति त्वयि स्वपादपद्मचारेणा- वनितलं पुनाने योजनशतान्तरतिवृष्टिरम्भोतिवर्षणमकालवर्षणं वा, अनावृष्टिः काळेऽप्यवर्षणं, वासव्यावदिवृष्टिरिव न भवेत् नाभूत्। किं विशिष्टा ?, उपतापकृत् सस्यौषधिभवनभविध्वंसकत्वेन विश्वस- न्तापकारिणी। क सति ?, त्वयि विश्वगुरौ लोकानां सत्त्वानां काम- वर्षिणि कामानभिलाषान् वर्षतीत्येवंशील कामवर्षी तस्मिन् सर्व- विश्वमनःसमीहितार्थप्रदानपटीयसि । तथात्वे हेतुमाह विश्वैक- वत्सले जगतोऽप्यनुपकारिणोपकारिणि । सर्वेऽप्यतिवृष्ट्यादिस्वरूपमपि त्वद्योगर्द्धिविलसितमेव । यथा ॥ ८ ॥

स्वराष्ट्र-परराष्ट्रेभ्यो, यत्क्षुद्रोपद्रवा द्रुतम् ।
विद्रवन्ति त्वत्प्रभावात्, सिंहनादादिव द्विपाः ॥९॥

अनु०–सिंहनादथी जेम हाथीओ भागी जाय तेम स्वराष्ट्र-परराष्ट्रथी उत्पन्न थयेला क्षुद्र उपद्रवो आपना प्रभावथी तत्काळ भागी जाय छे (०)

अव०-स्वरा० हे वीतराग! त्वत्प्रभावात्तव महिमातः स्वरा० स्वचक्रपरचक्रेभ्यो जाता इति गम्यं, क्षुद्रोपद्रवाः क्षुद्राण्युच्चाटनमन्त्रादिकृतान्युपद्रवाः शस्त्रजलानलादिकृता ग्रामभङ्गाद्या यद् द्रुतं शीघ्रं विद्रवन्ति-नश्यन्ति इव, यथा सिंहनादाद् द्विपा गजेन्द्राः ॥ ९ ॥

वि०-यच्च सकलमङ्गलमूलनिलये त्वयि भव्यानुग्रहाय महीं भव्यानुग्रहाय महीं विहरति। योजनशतान्त क्षुद्रोपद्रवा स्थान-अशधनमित्रप्राणनाशादयो द्रुतमविलम्बितं विद्रवन्ति-त्रस्यन्ति। कुत. पुनस्तेषामुद्भव इत्याह-स्वराष्ट्रपरराष्ट्रेभ्यः स्व च तद्राष्ट्र च स्वराष्ट्र तस्मादितरत्परराष्ट्रं तेभ्योऽयुक्तलोभसक्षोभविलुप्तमर्यादि-भ्यः स्वदेशाधिपतिभ्यो अतिवलाहङ्कृतिचलितेभ्य प्रतिवलभूपेभ्यश्च पदे पदे सुलभा एव क्षुद्रोपद्रवा प्राणिनाम्। ते च त्वत्प्रभावात्त-वाचिन्त्यमहिम्नो माहात्म्यात् सत्वर विलीयन्ते। अत्रोपमामाह-सिंहनादादिव द्विपा यथा द्विपा समदमदकला सिंहनादाद्गिनिद्र-पारीन्द्ररौद्रगुञ्जितात् क्षणाद्दिगोदिगतामुपयान्ति तद्वदिति। न चैत-दपि त्वद्योगसमृद्धेरपरस्य व्यवसितमिति। अन्यच्च ॥ ९ ॥

**यत् क्षीयते च दुर्भिक्षं, क्षितौ विहरति त्वयि।**
**सर्वाद्भुतप्रभावाढ्ये, जङ्गमे कल्पपादपे ॥ १० ॥**

**अनु०-सर्व प्रकारना अद्भुत-प्रभावशाळी जंगमकल्पतरु समान आप क्षितितल उपर विहरे छते दुर्भिक्ष क्षय पामी जाय छे. ॥ १० ॥**

अव०—यस्मिन्° हे वीतराग ! त्वयि क्षितौ पृथिव्यां विहरति सति दुर्भिक्षं दुष्कालः क्षीयते कर्मकर्त्रा प्रयोगोऽयं, यस्त्वयि कथम्भूते ?, सर्वा० सर्वेऽद्भुता आश्चर्यकारिणो ये प्रभावास्तैराढ्ये—समृद्धे, पुनः किम्भूते ?,कल्पपादपे—कल्पवृक्षे, कथम्भूते ?, जङ्गमे लोकहिताय गमनागमनकृति ॥ १० ॥

वि०—हे जगत्प्रतीक्ष्य ! क्षितौ क्षोणिमण्डले गव्यूतिशतद्वयान्तर्यवक्षेपदुर्गतगणप्रसमरावस्थं दुर्लभा भिक्षाऽन्नमेति यस्तस्याऽभिवाभिख्या दुर्भिक्षम् । क्षीयते सकलपरिग्रहपिण्डादिदुष्कृते सह क्षयमुपयाति । क सति ?, त्वयि विहरति विहारयोगाज्जगतीतलमलङ्कुर्वाणि । किं विशेषे ? कल्पपादपे—सुरभूरुहि । ययेव कथं तस्य विहारसम्भव ?, इत्याह—जङ्गमे—गतागतकृति । पुनः किं विशिष्टे ?, सर्वाद्भुतप्रभावाढ्ये सर्वेभ्योऽद्भुत—सर्वाद्भुतः । स चासौ प्रभावश्च तेनाढ्ये भवरिद्धे । एतदुक्तं भवति—किल स्थावरोऽपि कल्पविटपी यथाविधदैवताधिष्ठितविमानात्वरिवस्यामीमनोरथप्रपूरणेन प्रभावाढ्यो भवति भगवतस्तु सकलैहिकामुष्मिकसुखसम्पत्सङ्घटनजङ्गमकल्पविटपिन स्थाने सर्वाद्भुतप्रभावाढ्यत्वम् । सङ्क्षिप्तश्च कल्पपादपप्रकारपुरस्कृतायां भुवि दुर्भिक्षक्षय इत्यहो त्वद्योगोपनिपातीश्चर्यम् । अपरञ्च ॥ १० ॥

यन्मूर्ध्न पश्चिमे भागे, जितमार्तण्डमण्डलम् ।
मा भूद्वपुर्दुरालोकमितीवोत्पिण्डितं मह ॥ ११ ॥

अनु०–आपनुं शरीर जोवामां अडचण न आवे

ए माटे ज जाणे होय नहि तेम सुरासुरोए आपना मस्तकनी पाछळ एक स्थाने भेगुं करेलुं आपना शरीरनुं ज महा तेज जाणे न होय तेवुं सूर्यना मंडळने पण जीती जनारुं तेजनुं मंडळ-भामंडळ स्थापेलुं छे. ( ११ )

अव०-यन्मूर्ध्नः० हे वीतराग ! यत्तव मूर्ध्नः शिरसः पश्चिमे भागे पृष्ठभागे उत्पिण्डितं पिण्डीकृत्य सुरैः स्थापितं महः शरीरतेजोऽस्ति, किं विशिष्टं ?, जित० जितं मार्तण्ड-मण्डलं सूर्यबिम्बं येन तत्; उत्पिण्डितं कुत ?, इत्याह-मा भू० वपुस्तेजःपुञ्जपरीततया दुरालोकं दुर्लक्ष्यं मा भवतु इतीव इति हेतोः ॥११ ॥

वि०-हे सकलातिशायिमुनिजनमूर्धन्य ! यत्तव मूर्ध्ने पश्चिमे भागे उत्तमाङ्गमनु महसा पटलमुन्मीलति । किं विशिष्टं ?, जितमार्त्त-ण्डमण्डल निजतेजस्तृणीकृतचण्डांशुमण्डलम् । भामण्डलं च भुवन-भर्तुर्घातिकर्म्मक्षयसहचरितमपि स्तुतिकृदुत्प्रेक्षते । किल परिमित-मयूखमालिनोऽप्यंशुमालिनो मण्डल यथा दुरालोक दुर्दर्शं, तथा अनन्तविमलकेवलालोकनिलयस्य सकललोकलोचनस्पृहणीयस्य स्वा-मिनोऽपि वपुरचक्षुष्य मा भूदिति सुरासुरादिभिरिद मूर्धानमनु देहस्यैव महोमण्डलमुत्पिण्डितमेकत्र पिण्डीकृत्यावस्थापितमित्यहो तव योगसमृद्धेरतिशय. । एवमतिशयानभिधाय प्रकृते योज-यति ॥ ११ ॥

स एष योगसाम्राज्यमहिमा विश्वविश्रुतः ।
कर्मक्षयोत्थो भगवन्कस्य नाश्चर्यकारणम् ?॥१२॥

अनु०–हे भगवन् ! ते आ घातीकर्मना क्षयथी उत्पन्न थयेलो विश्वविख्यात—योगसाम्राज्यनो महिमा कोने आश्चर्य करनारो नथी ? ( १२ )

अव०–स एष० हे भगवन् ! स इति यच्छब्देन पुरा प्रतिपादित एष प्रत्यक्षलक्ष्यो योग• योगो ज्ञानादित्रय तस्य साम्राज्यं सामस्त्यं तन्महिमा कस्य सचेतनस्याश्चर्यकारण न स्यात् !, महिमा किं वि० ?, कर्मक्षयोत्थः–घातिकर्म्मणां क्षये सोत्पन्नः, पुनः किं वि० ?, विश्वविश्रुतः–त्रैलोक्यप्रसिद्धः॥१२॥

वि०–हे भगवन् ! स एष पूर्वोपवर्णितस्तव योगसाम्राज्य महिमा योगो ज्ञानदर्शनचारित्ररूपरत्नत्रयसमवायः, स एव त्रिभुवनसभासनसम्प्रदुत्पादकत्वेन साम्राज्यमिव, तस्य महिमा स्फूर्जितं, कस्य नाम विचारचातुरीधुरीणस्य प्रेक्षापूर्वकारिणो नाश्चर्यकारण मलौकिकविस्मयहेतु । न चायं स्वगृहकोणमात्रमभूत एव, किन्तु विश्वविश्रुतश्चराचरेऽपि जगति विख्यात । कुत पुनस्त्वाममेयस्य योगमहिम्न समुत्थानमित्याह–कर्मक्षयोत्थ कर्मणां घातिकर्म्मणां क्षयेणात्यन्ताभावेनोत्थान यस्य स तथा, न पुन परपरिगृहीतस्य सदाशिवादेरिव सहभूस्तम्याममाणिकत्वादिति । न चायमीपत्कर तय कर्मणामित्युपवर्णयन्नाह ॥ ११ ॥

**अनन्तकालप्रचितमनन्तमपि सर्वथा ।**
**त्वत्तो नान्यः कर्मकक्षमुन्मूलयति मूलतः ॥१३॥**

अनु०-अनन्त कालथी उपार्जन करेल अने अन्त विनाना कर्मवनने आपना सिवाय बीजो कोई मूलथी उखेडी नांखवाने समर्थ नथी. ( १३ )

अव०-अन०-हे वीतराग ! अनन्तकालेनानन्तपुद्गल-परावर्त्तैः प्रचितमुपार्जितमनन्तमपि कर्मकक्ष कर्मकाननं त्वत्तोऽन्योऽपरो हरिहरादिर्मूलतस्सर्वथा सर्वप्रकारैर्नोन्मूलयति-न छिनत्ति ॥ १३ ॥

वि०-हे निरुपमशक्तिसपन्न !, स्वामिंस्त्वद्विधात्त्वदनुगृहीताद्वा अन्यो व्यतिरिक्तः, कर्मणा-ज्ञानावरणादीना कक्ष मूलोत्तरप्रकृति-जालगहन क इव मूलादुन्मूलयति । किं विशिष्ट ?, अनन्तकाल-प्रचित अनन्तै पुद्गलपरावर्त्तैरुपचय नीत, अत एवानन्तमपिरिमि-तम् । कथ ?, सर्वथा सर्वात्मनाऽपुनरुद्भवाय । एवविध च कर्म-कक्ष त्वमिवाविदितोन्मूलनोपाय क समूलमुन्मूलयितुमलम्भूष्णुर्न कोऽपीति भाव ॥ १३ ॥ अथ कथमेवमतिमात्रप्रचितस्य भगवता समूलोन्मूलनमकारीत्युपदर्शयन्नाह ।

**तथोपाये प्रवृत्तस्त्वं, क्रियासमभिहारतः ।**
**यथानिच्छन्नुपेयस्य, परां श्रियमशिश्रियः ॥१४॥**

अनु०—हे प्रभु ! चारित्ररूपी उपायमां वारंवार अभ्यासथी आप तेवा प्रकारे प्रवृत्त थया छो के जेथी नहि इच्छवा छतां उपेय-मोक्षनी उत्कृष्ट लक्ष्मीने आपे प्राप्त करी छे (१४)

अव०—तथो० हे वीतराग ! त्वं क्रियासमभिहारतः क्रियायाः पौनःपुन्येन नैरन्तर्येणोपाये चारित्ररूपे तथा प्रवृत्तः आदरवान् यथोपेयस्योपायसाध्यस्य परमपदस्य परां प्रकृष्टां श्रियं परमार्हन्त्यलक्ष्मीमवाञ्छन्नप्यशिश्रियः प्राप्तवानपि गम्यः ॥ १४ ॥

वि०—हे सकलसदुपायनिलय भगवंस्त्वं तथा तेन लोकोत्तर प्रकारेण कर्मणां क्षयोपाये सम्यग्ज्ञानदर्शनचारित्रासेवनलक्षणे प्रवृत्तः प्रवृत्तिमकार्षीर्यथा परां श्रियमशिश्रियः । कथं प्रवृत्त इत्याह—क्रियासमभिहारतः पौनःपुन्येन नैरन्तर्येण । गृहीतमुक्ता ज्ञानादयो न खलु स्वसाध्यसाधनायालम् । ननु यदि सम्यग्ज्ञानादय एव कर्मक्षयानन्यसाधनं तर्हि सकृत्सेविता एव न स्वकार्यं कुर्युर्येन क्रियासमभिहार इत्युक्तं ? उच्यते—परिणामप्रकर्षाधीना हि ज्ञानादीनां कर्मक्षयहेतुता परिणामश्च मन्दमध्यतीव्रभेदात्त्रिधा अतस्तदनुमानेन तदाराधकानां साध्यसिद्धिः । यदत्रापि वाचकमुख्येन—" आराधनास्तु तेषां तिस्रस्तु जघन्यमध्यमोत्कृष्टा । जन्मभिरष्टत्र्येकैः सिध्यन्त्याराधकास्तासाम् ॥ १ ॥ ’ तेषां ज्ञानादीनां मन्दमध्यतीव्रपरिणामप्रभवा जघन्यमध्यमोत्कृष्टास्तिस्र आराधनाः

अतस्तदाराधका यथाक्रममष्टत्र्येकैर्जन्मभिः सिध्यन्ति । एतदुक्त भवति–मन्दपरिणामेन ज्ञानाद्याराधका अष्टभिर्जन्मभि सिध्यन्ति, मध्यमपरिणामेन जन्मभिस्त्रिभिस्तीव्रपरिणामेनैकेन तेनैव भवेन सिध्यन्तीति क्रियासमभिहार इत्युक्तम् । अतस्त्व स्वामिस्तीव्रशुभाध्यवसायसहचरितस्तथा कर्मक्षयोपाये सम्यग्ज्ञानाद्यासेवने प्रवृत्तिमकृथा यथाऽक्षेपेणैव परा सर्वोत्कृष्टामनुत्तरसुरादिभिरपि प्रार्थनीया श्रिय परमार्हन्त्यलक्षणामङ्गिश्रियः प्राप्तवान् । किं कुर्वन् ? उपेयस्यानिच्छन्नपि, सम्यग्ज्ञानाद्यासेवन ह्युपाय , परमपदलाभस्तूपेयः । अतस्त्व ‘ समे मुक्खे भवे तहा ’ इत्यादिश्रुतेरुपेय परमपदमनिच्छन्नप्यप्रार्थयन्नपि कृतकृत्योऽभूरित्यहो तव फलोदयव्यवसायिता ।

एव च कर्मक्षयात् कृतकृत्यं परमात्मान स्तुतिकृत्प्रणिनिंसुराह–

**मैत्रीपवित्रपात्राय, मुदितामोदशालिने ।**
**कृपोपेक्षाप्रतीक्षाय, तुभ्यं योगात्मने नमः ॥१५॥**

**अनु०–मैत्री भावनाना पवित्र पात्ररूप, प्रमोद भावनावडे सुशोभित, तथा करुणा अने माध्यस्थ्य भावनावडे पूजनीय योगात्मा–योगस्वरूप एवा आपने नमस्कार थाओ. ( १५ )**

पूर्वोक्तस्य सर्वस्य रहस्यभूतं मैत्र्यादिचतुष्कं प्रकाशयन्त आहुः–

अव०–मैत्री० हे वीतराग ! “मा कार्षीत्कोऽपि पापानि,

मा च भूत्कोऽपि दुःखितः । मुच्यतां जगदप्येषा, मतिर्मैत्री निगद्यते ॥ १ ॥" इत्युक्तलक्षणा मैत्री तस्याः पवित्रपात्राय- निमलभाजनाय, मुदितः पुष्टो य आमोदः-प्रमोदः, "अपास्ताशेषदोषाणां, वस्तुतत्त्वावलोकिनाम् । गुणेषु पक्षपातो यः, स प्रमोदः प्रकीर्त्तित ॥ २ ॥" इत्युक्तलक्षणस्तेन शालिने- शोभमानाय, "दीनष्वार्त्तेषु भीतेषु, याचमानेषु जीवितम् । प्रतीकारपरा बुद्धिः, कारुण्यमभिधीयते ॥ ३ ॥" ईदृशी कृपा कारुण्य, "क्रूरकर्म्मसु निःशङ्कं, देवतागुरुनिन्दिषु । आत्मशंसिषु योपेक्षा, तन्माध्यस्थ्यमुदीरितम् ॥ ४ ॥" एवं- विधोपेक्षा माध्यस्थ्यमित्यर्थः, ताभ्यां कृत्वा प्रतीक्ष्याय पूज्याय, योगात्मन योगस्वरूपाय तुभ्यं नमोऽस्त्विति ॥१५॥ इति श्रीवीतरागस्तोत्रे तृतीयस्य कर्मक्षयजातिशयवर्णनस्तव

स्यावचूर्णिः ।

वि०-हे भगवंस्तुभ्यमेवंविधाय नमोऽस्तु त्रिकरणशुद्ध्या त्वां प्रति प्रणतोऽस्मि । किं विशिष्टाय ?, मैत्रीपवित्रपात्राय 'पापानि कोपि मा कार्षीद्दुःखित कोऽपि मा भूद् जगदपि दुष्कर्मभ्यो मुच्यताम्' एवंविधा मतिर्मैत्री, तस्याः पवित्रपात्राय-पुण्याश्रयाय । तथा मुदितामोदशालिने, निरस्तसमस्तदोषाणां वस्तुतत्त्वावलोकतत्पराणां च गुणिनां गुणेषु यः प्रमोदः सा मुदिता तया मोदशालिने सदानन्दोपमिपण्णाय । तथा कृपोपेक्षाप्रतीक्षाय, दीनार्त्तभीतादि प्राणिगणप्रतीकारानुचिन्तनं कृपा, नास्तिकनिस्त्रिंशादिनिर्गुणजन

माध्यस्थ्यमुपेक्षा ताभ्या कृपोपेक्षाभ्या प्रतीक्षाय जगत्पूज्याय तुभ्यं नम.। कुत· पुनरय मैत्र्यादियोगप्रकार· प्रभोरभूदित्याह। योगात्मने-सिद्धाद्भुतयोगसम्पदे । एवंविधाय च तुभ्य त्वत्स्वरूपप्राप्तिनिमित्त-महं प्रणतोऽस्मीति ।

इति श्रीवीतरागस्तोत्रे तृतीयस्य कर्मक्षयजातिशयवर्णनस्तवस्य पदयोजना ॥ १५ ॥

एव कर्मक्षयजातिशयानभिधाय सुरकृतातिशयाश्चतुर्थप्रकाशे प्रस्तावयन्नाह—

**मिथ्यादृशां युगान्तार्कः, सुदृशाममृताञ्जनम् ।**
**तिलकं तीर्थकृल्लक्ष्म्याः, पुरश्चक्रं तवैधते ॥ १ ॥**

अनु०-मिथ्यादृष्टिओने प्रलय-काळना सूर्य तुल्य अने सम्यग्दृष्टिओने अमृतना अञ्जन-तुल्य शान्तिकारी. तीर्थंकरनी लक्ष्मीना तिलकभूत हे प्रभु ! आपनी आगळ धर्मचक्र शोभी रह्युं छे. (१)

सुरकृतातिशयान् प्रकटयन्ति-

अव०-मिथ्या० हे वीतराग ! तव पुरः पदतले धर्म-चक्रमेधते-दीप्यते किं विशिष्टम् ?, मिथ्यादृशां-मिथ्यात्विनां युगान्तः प्रलयकालस्तत्सूर्यः सन्तापकत्वात्, सुदृशाममृता-ञ्जनमिव, तीर्थकरपदव्या भाले तिलकमिव ॥ १ ॥

वि०—हे धर्मचक्रिंस्तव धर्मदेशनसदनोपाधीनस्य भव्यलोकस्य प्रहाय महीं विहरतश्च पुरः पुरोभागे गगनगतं विचित्रारकराजिविराजित प्रसमरोष्मणतेजःपटलमलिनितान्तरिक्षकुक्षिकुहरं प्रतिहतसमस्तविक्रान्तपरमतचक्रं धर्मचक्रमेधते । किं विशिष्टं ?, विमिश्रलिङ्गिनिर्दे-शान्मिथ्यादृशां युगान्तार्कः । मिथ्या—तत्त्वार्थदर्शनं प्रति विपरीता दृग्—विचारो येषां ते मिथ्यादृशः प्रथमगुणस्थानस्थास्तेषामत्यन्तदुरालोकत्वेन युगान्तार्कः प्रलयकालकरालमार्तण्डमण्डलप्रतिम । तथा सुदृशाममृताञ्जनं सुष्ठु शोभना तत्त्वार्थदर्शिनी दृग् येषां ते सुदृशस्तेषां ज्ञानचक्षुःसविशेषनिर्मलीकरणेनामृताञ्जनं सुधाञ्जनमिव । तथा तिलकं तीर्थकरलक्ष्म्याः, तीर्थं चतुर्वर्णः सङ्घस्तत्कुर्वन्तीति तीर्थकृतस्तेषां लक्ष्मी परमार्हन्त्यसम्पत्तस्याः सद्रूपत्वादि कल्पितत्वेन तिलकं भालभूषणमिव । एते च धर्मचक्रादयो यस्य मायाविस्मयास्तीर्थकृतां न सहजा नापि कर्मक्षयजाः किन्तु तत्र भक्तिप्रेरितैस्त्रिदशैरेव विधीयन्ते इति ॥ १ ॥ तथा—

एकोऽयमेव जगति, स्वामीत्याख्यातुमुच्छ्रिता ।
उच्चैरिन्द्रध्वजव्याजात्तर्जनी जम्भाविद्विषा ॥ २ ॥

अनु – जगतमां आ वीतराग ज एक स्वामी छे ' एम कहेवान माटे इन्द्रे ऊंचा एवा इन्द्रध्वजना बहाने पोतानी तर्जनी आंगळी ऊंची करी न होय एम जणाय छे ( २ )

अव०-एकोय० जगति त्रैलोक्य एकोऽयं वीतराग एव स्वामी धनिकस्त्रातेत्याख्यातुं-ज्ञापयितुं जम्भविद्विषा इन्द्रेणो-च्चैरिन्द्रध्वजव्याजात् सहस्रयोजनमानोच्चमहेन्द्रध्वजच्छलात् तर्जनी आद्याङ्गुल्युच्छ्रिता ऊर्ध्वीकृतास्तीति गम्यते ॥ २ ॥

वि०-किल भगवतामर्हता विहारादौ सदैव योजनसहस्रो-च्छ्रित. कान्तकार्चस्वरदण्डाधार सुरपथावतरदमरतरङ्गिणीप्रवाह-पेशल' परिसरस्फुरदनेकदिव्यांशुकपताकापरिकरित क्वणन्मणि-किङ्किणीगणारवमुखरिताशेषहरिन्मुख सुरासुरैः पुर' सञ्चार्यमाणो महेन्द्रध्वज. प्रसर्पति, तमेव स्तुतिकृदुत्प्रेक्षते-किल नायमिन्द्रध्वजः किन्त्वस्य व्याजादिय जम्भारिणा तर्जनी समुच्छ्रिता । किमर्थं ?, आख्यातु-कथयितुम् । किं तदित्याह-यदुतास्मिन् जगत्ययं प्रणयप्रणमदमरनरप्राग्रहरशिर किरीटप्रतीष्टशासनो भगवानर्हन्नेव स्वामी नान्य. । कथमुच्छ्रिता ?, उच्चैर्जगतोऽपि समक्ष भगवतस्त्व-द्वितीयत्वेनेयमुत्प्रेक्षाऽपि स्वभावोक्तिरेवेति ॥ २ ॥ अन्यच्च—

**यत्र पादौ पदं धत्तस्तव तत्र सुरासुराः ।**
**किरन्ति पङ्कजव्याजाच्छ्रियं पङ्कजवासिनीम् ॥३॥**

अनु०-ज्यां आपना बे चरणो स्थान धारण करे छे, त्यां देव अने दानवो सुवर्ण कमळना मिषथी कमळमां निवास करनारी लक्ष्मीने विस्तारे छे. (३)

अव०–यत्र० हे वीतराग ! यत्र तव पादौ पद न्यासं यतः कुरुतस्तत्र सुरासुराः पङ्कजन्यासाभवकनककमलच्छलतः पङ्कवासिनीं श्रिय–लक्ष्मीं किरन्ति–मुञ्चन्ति ॥ ३ ॥

वि०–तीर्थकृतो हि किल केवलोत्पत्तेरनन्तरनाम्यामिक्षमतस्तु न स्पृशन्ति । केवलमरगणोपकल्पितेषु नवसु कनककमलेषु क्रमन्यासं विदधति । इदमेव स्तुतिकृत्प्रकारान्तरेणाह–हे भगवन् ! यत्र–यस्मिन् प्रदेशे तव पादौ चरणौ पदमवस्थानं धत्तः कुरुतः तत्र सुरासुरा देवदानवा श्रिय विकिरन्ति–विक्षिपन्ति । कामित्याह पङ्कवासिनीं नलिननिलयाम् । कस्मात् पङ्कजन्यासात् चामीकरारविन्दस्थपदेशात् । भवति च त्रिभुवनलक्ष्मीनिवासस्य भगवतश्चरणन्यासादवने सश्री कतेति ॥ ३ ॥ अपरं च—

दानशीलतपोभावभेदाद्धर्मं चतुर्विधम् ।
मन्ये युगपदाख्यातु, चतुर्वक्त्रोऽभवद्भवान् ॥४॥

अनु०–दान, शील, तप अने भावना भेदथी चार प्रकारना धर्मने एक साथे कहेवा माटे ज होय नहि तेम आप चार मुखवाळा थया छो, एम हु मानु छु (४)

अव०–दान० हे वीतराग ! दानशीलतपोभावभेदाच्चतु र्विधं चतुष्प्रकारं धर्म युगपत्समकालमाख्यातुं भवांश्चतुर्वक्त्र श्चतूरूपो बभूवेत्यहं मन्ये ॥ ४ ॥

वि०—भुवनबान्धवे हि धर्मोपदेशनिमित्तमन्तसमवसरणमरकल्पितमलङ्कृत्य मृगेन्द्रासनमुपविष्टे प्राङ्मुखे दक्षिणापरोत्तरासु तिसृष्वपि दिक्षु तथास्थितेरेव विरचयन्ति व्यन्तरसुराः स्वामिप्रतिच्छन्दानि । इदमेव स्तुतिकृदुत्प्रेक्षते—हे भुवनस्वामिन्नहमेवं मन्ये, यद्भवानेतदर्थं चतुर्वक्त्रोऽभवत् । किमर्थमित्याह—आख्यातु कथयितुम्, किं तद्धर्म्मं प्रथमपुरुषार्थम् । किं विशिष्ट ? चतुर्विध चतुष्प्रकारम् । चातुर्विध्यमेवाह—दानशीलतपोभावभेदाद् दानशीलतपोभावनारूपम् । नन्वेकरूपोऽपि भगवांश्चतुर्विधमपि धर्मं पर्यायेण प्ररूपयिष्यति किं चतुर्मुखत्वेनेत्याह—युगपत्समकाल एतच्चतुर्वक्त्रत्वमन्तरेण नोपपद्यत इति ॥ ४ ॥

साम्प्रतं भगवत परमार्हन्त्यप्रभावप्रेरितै सुरासुरै॰ या प्राकारत्रयरचना भक्तया विधीयते तस्या एव विधाने स्तुतिकृत् कारणान्तरमुद्भावयन्नाह—

**त्वयि दोषत्रयात् त्रातुं, प्रवृत्ते भुवनत्रयीम् ।**
**प्राकारत्रितयं चक्रुस्त्रयोऽपि त्रिदिवौकसः ॥ ५ ॥**

अनु०—त्रणे भुवनने रागद्वेष अने मोहरूप त्रणे दोषोथी बचाववाने माटे आप प्रवृत्त थये छते वैमानिक, ज्योतिषी अने भवनपति एम त्रण प्रकारना देवोए रत्नमय, सुवर्णमय अने रूप्यमय एम त्रण प्रकारना किल्लाओनी रचना करी छे. ( ५ )

अव०—त्वयि० हे वीतराग ! त्वयि त्रैलोक्यं दोषत्रयान्म-

नोवाकायलक्षणाद्रागद्वेषमोहरूपाद्वा त्रातुं रक्षितुं प्रभवे, त्रयोऽपि वैमानिकज्योतिष्कभवनपतयस्त्रिदिवौकसो देवाः प्राकारत्रय रत्नस्वर्णरूप्यमय चक्रुः । दुर्गयोगेन हि रक्षा सुसाध्या ॥ ५ ॥

वि०—हे जगच्छरण्य !, वैमानिकभुवनाधिपज्योतिष्पतिरूपास्त्रयोऽपि त्रिदिवौकसो देवास्त्वामनु प्राकारत्रितय मणिस्वर्णरजतमयं विरचयाञ्चक्रुः । क सति ? त्वय्यतुलबलपराक्रमे भुवनत्रयी स्वर्गमर्त्यपाताललक्षणां त्रस्ते तदुपचाराद्भुवनत्रयगतान् भव्यसत्त्वान् त्रातुं परिरक्षितुं प्रभवे कृतोपक्रमे सति । कस्माद्दोषत्रयात्सन्निपातपरेणाख्या द्रागद्वेषमोहरूपात् यैकेन प्राकारेण अल्पतरारातित्रयमाक्रान्ता त्रिजगती युगपत्परित्रातुं शक्यते तस्मिन्नैश्वर्यमेव प्राकारत्रयनिर्मितिरिति ॥ ५ ॥

तथा—

अधोमुखा कण्टका स्युर्धात्र्यां विहरतस्तव ।
भवेयुः सम्मुखीना किं,तामसास्तिग्मरोचिषः?।६।

अनु०—पृथ्वीतल पर आपे विहार कर्ये छते कण्टको—कांटाओ अधोमुखवाळा थई जाय छे सूर्य उदय पामे त्यारे घुवड अथवा अंधकारना समूह शुं टकी शके खरा ? ( ६ )

अव०—अधो० हे वीतराग ! तव धात्र्यां पृथ्व्यां विहरतः, कण्टकाः पदपीडिनो दुर्मना अप्यधोमुखा—न्यग्मुखाः

स्युः । दृष्टान्तमाह । तिग्मरोचिषो रवेस्तामसास्तमसां समूहा अन्धारकारिणो घूकादयो वा किं संमुखा भवेयुः?, अपि तु न भवन्त्येव ॥ ६ ॥

वि०-हे मर्दितकषायकण्टक ! तव धान्या सकलमङ्गलालिङ्गितायामिलाया ससारचारकगतान् भव्यसत्त्वान् उन्मोचयितु विहरत, कण्टका ग्रामराष्ट्रकाष्ठास्थिलोहादिमया जगतोऽपि निर्निमित्तमेव निर्मितव(त)रमात्मनो मर्मवेधदु कृतमनुस्मृत्य विश्वजनीनस्य तव स्व मुख दर्शयितुमशक्ता इवाधोमुखा· प्रवेष्टुमिव पातालमवाङ्मुखा· स्युर्भवेयु· । अत्रैवार्थान्तरन्यासमाह-युक्तमेवैत त्तामसास्तमसा समूहास्तिग्मरोचिष खररश्मेः संमुखीना· किं क्वचिद्देशे काले वा भवेयु ?, नैवेति भावः । किञ्च—

**केशरोमनखश्मश्रु, तवावस्थितमित्ययम् ।**
**बाह्योऽपि योगमहिमा, नाप्तस्तीर्थकरैः परैः ॥७॥**

अनु०-आपना केश, रोम, नख अने श्मश्रु-दाढी मूछना वाळ अवस्थित-दीक्षा ग्रहण अवसरे जेटला होय छे तेटला ज रहे छे. आ प्रकारनो बाह्य पण योगनो महिमा हरिहरादि अन्य देवोए प्राप्त कर्यो नथी. ( ७ )

अव०-केश० हे वीतराग ! केशाः शिरोरुहाः, रोमा-

व्यपरोपाङ्गसम्भवानि, नखाः करचरणभवाः, श्मश्रु–कूर्चः समाहारद्वन्द्वः, तत् केशरोमनखश्मश्रु अवस्थितं दीक्षाग्रहणावसरे यथा समारचितं भवति तथैवावतिष्ठते–न वर्द्धत इत्यर्थः। इत्यथ बाह्योऽपि योगमहिमा परैस्तीर्थकृद्भिर्हरिहरादिभिर्नाप्तः नासादितः। अन्तरङ्गस्तु सर्वाभिमुख्यमेत्यादिस्तवोक्तो दूरे ॥७॥

वि०–हे अममेयमहिमन्! भगवन्! परैरसर्वज्ञत्वेन त्वद्व्यतिरिक्तैः कुतीर्थिकशिरस्कैः यावदाभ्यन्तर सर्वाभिमुख्यतादिर्महिमप्रकर्षस्तावत् पूर्वोपवर्णितस्तत्र योगमहिमा, यावदयं बाह्योऽपि न प्राप्तः । अथ क इव ?, स इत्याह—केशरोमनखश्मश्रु तथावस्थितमिति। केशाः–शिरोरुहाः, रोमाण्यङ्गरुहाणि नखाः करचरणाङ्गुलिप्रभवाः, श्मश्रु–कूर्चम्। एतच्च तथावस्थितं यावन्मात्रं सर्वविरतिप्रतिपत्तिप्रस्तावेऽवस्थितं तावन्मात्रमेव न पुनर्न्यूनाधिकम्। अथ चाभ्यासीकरदिस्समाश्रयत्वेन बाह्य एव योगमहिमा, किन्तु परैः मलिक्षणोपचीयमानापचीयमानकेशादिकत्वर्बिसैर्न प्राप्तः। कुतः पुनरान्तरस्य त्वद्योगमहिम्नस्तेषां प्राप्तिसम्भावनैव। ननु यदि भगवतो योगमहिम्ना केशादीनां यथावदवस्थानं तर्हि क्रिमस्यातिशयस्य सुरकृतातिशयेषु भणनम् ?, न पुनः कर्मक्षयजेषु ?; सत्यम् न खलु भगवद्योगमहिम्ना केशादीनां यथावदवस्थिति; किन्तु सर्वविरत्यवसरे पुरन्दरमेरितवम्मोलिविद स्थितोद्धृतिशक्तीनां तेषाममुष्य इति सुरकृत एवायमतिशय । ननु यद्येवं तदा तथात्वमपि योगमहिमा परैर्नाप्त इति किमर्थं स्तुतिकृताभिदधे ? उच्यते—यत्किल पौलोमीपति परमेष्ठिनः किङ्कर इव केशादिष्ववस्थापन विधत्ते स भगवत एव योगमहिमेति समञ्जसम्।

अन्यच्च—

**शब्दरूपरसस्पर्शगन्धाख्याः पञ्च गोचराः ।**
**भजन्ति प्रातिकूल्यं न, त्वदग्रे तार्किका इव ॥८॥**

**अनु०-आपनी आगळ बौद्ध, नैयायिकादि तार्किकोनी जेम शब्द, रूप, रस, स्पर्श; अने गन्ध-रूप पांचे इन्द्रियोना विषयो प्रतिकूलपणाने भजता नथी, किन्तु अनुकूळताने धारण करे छे. ( ८ )**

अव०–शब्द० हे वीतराग ! शब्दरूपरसस्पर्शगन्धाख्याः पञ्च गोचरा विषयास्त्वदग्रे तार्किका इव–बौद्धनैयायिकादय इव प्रातिकूल्यं–विपरीतभावं न भजन्ति ॥८॥

त्रि०–हे वागगोचरचरित्रपवित्र ! स्वामिन्नमी पञ्चापि गोचरास्त्वदग्रे त्वत्सन्निधौ प्रातिकूल्य प्रतिकूलता न भजन्ति, प्रत्युतानुकूलतामेव श्रयन्ते । के त इत्याह–शब्दरूपरसस्पर्शगन्धाख्या यथाक्रम श्रोत्रनेत्ररसनस्पर्शनघ्राणादीन्द्रियविषया । किमुक्त भवति–यत्र हि त्रिजगद्गुरुर्विहरति तत्र वेणुवीणामृदङ्गमधुरगीतध्वनिजयजीवनन्देतिप्रमुखा' सुखदा एव शब्दाः श्रुतिपथमवतरन्ति, न पुनः खरकरभकाकरवकरुणक्रन्दितादय । तथा रूपाण्यपि रमणीयनरनारीनृपतिविभूतिदिव्यविमानप्रासादसफलारामपूर्णसर पुष्करिणीप्रभृतीन्येव नयनगोचरमवतरन्ति, न पुनर्मलविलीनव्याधितमृतादीनि । तथा रसा अपि मृद्वी-

कापशर्कराखर्जूरमाक्षिकेक्षुसहकारनारङ्गकदलीदाडिमीफलादीनां परिणमन्ति, न पुनः पिचुमन्दघोषातक्यादीनाम् । तथा स्पर्शा अपि मृदुदुकूलपिहितशुचिहंसतूलीकलितकामिनाङ्गावयवाद्यो, न पुनः खरशर्कराकठिनाश्मकण्टकादीनाम् । तथा गन्धा अपि घनसारागरुमृगमदमलयजमन्दारपारिजातकमलकुवलयचम्पककुङ्कुमकनककेतकमालतीपाटलादीनामेव प्रापुटसन्तर्प्यणपटिष्ठा न पुनः शवकलेवरलशुनादीनाम् । एवममी पञ्चापि विषयाः स्वामिसंनिधौ प्रतिकूलतां त्यजन्ति । के इव ?, तार्किका इव । यथा—भगवद्रोचरोपगताः सौगतसांख्यशैवमीमांसकलोकायतकाः (नैयायिकाः) पञ्चापि प्रामाणिकाः प्रतिहतप्रातिभत्वेन विगलन्मदाः प्रतिकूलतां मुञ्चन्ति, सद्वदेतेऽपीति भावः ।

त्वत्पादावृतवः सर्वे, युगपत्पर्युपासते ।
आकालकृतकन्दर्प—साहायकभयादिव ॥ ९ ॥

अनु०—अनादि कालथी कामदेवने करेली सहायना भयथी ज जाणे होय नहि तेम सघळी ऋतुओ एक साथे आवीने आपना चरणोनी सेवा करे छे (९)

अव०—त्वत्पा०—हे वीतराग ! त्वत्पादौ सर्वे वसन्ताद्या ऋतवो युगपदेकवारं पर्युपासते आश्रयन्ति, समवसरणसमीपस्थवनेषु सर्वऋतुनां पुष्पफलसम्भवात् पुष्पप्रकरे सर्वर्तु

१ × × × सर्वर्तुकपुष्पसम्भवात् इति प्रत्यन्तरे ।

कपुष्पसम्भवाद्वा । कुतः ?, आकालमासंसारं तैः कृतं यत्कन्दर्पस्य भगवत्प्रतिपक्षस्य साहाय्यकं माहाय्य तेन यद्भयं तस्मादिव । श्लोकद्वयेन एकोऽतिशयः ॥ ९ ॥

वि०–हे विश्वोपास्य ! भगवन् ! त्वत्पादौ त्वच्चलननलिने ऋतवः सुरभिग्रीष्मवर्षाशरद्धेमन्तशिशिराख्या. सर्वे षडपि पर्युपासते–सेवन्ते । ननु ऋतुभिरवसरप्राप्तैर्जगदपि सेव्यत एव किमधिक स्वामिन ?, इत्याह–युगपत्समकालम् । साम्प्रतमृतूपासने स्तुतिकृत् कारणमुद्भावयन्नाह–आकालेत्यादि । आकालमाससार कृत निर्मित भगवन्निग्राह्यस्य कन्दर्प्पस्य कामस्य यत्साहाय्यक साहाय्यम् , उद्दीपनविभावा हि वसन्तादय' स्मरविकाराणामतस्तद्भयादिव । किमुक्त भवति–किल न खलु भक्त्या भगवन्तमृतव समुपासते, किन्तु यथानेन महामोहोन्माथिना सपदि मन्मथ' प्रमथितस्तथा मा नामास्मानपि तद्गृह्यान्निग्रहीष्यतीति भीतभीता इव स्वस्वोचितप्रसूनदलफलपटलोपायनपाणयस्ते स्वामिनमुपासते ।

तथा यत्र किलार्हदवस्थान भवति तत्र त्रिदशाः सुरभिसलिल प्रसूनपटल च मुञ्चन्तीत्येतदेव स्तुतिकृद्भङ्ग्यन्तरेणाह–

**सुगन्ध्युदकवर्षेण, दिव्यपुष्पोत्करेण च ।**
**भाविवत्पादसंस्पर्शां, पूजयन्ति भुवं सुराः ॥१०॥**

**अनु०–भविष्यमां आपना चरणनो स्पर्श थवानो छे एम जाणी ते भूमिने देवताओ सुगन्धि जलनी वृष्टिवडे पूजे छे. ( १० )**

कासर्करामर्जूरनालिकेरेक्षुसहकारनारङ्गकदलीदाडिमीफलादीनां परिणमन्ति, न पुन पिचुमन्दघोषातक्यादीनाम् । तथा स्पर्शा अपि मृदुदुकूलपिहितशुचिहंसतूलीकलितकल्पाङ्गावयवादयो, न पुन खरशर्कराकठिनाश्मकण्टकादीनाम् । तथा गन्धा अपि घनसारागरुमृगमदमलयमन्दारपारिजातकमलकुवलयचम्पकबकुलकन्दकेतकमालतीपाटलादीनामेव प्राणपुरसन्तर्पणपटिष्ठा न पुनर्मृतकलेवरलशुनादीनाम् । एवममी पञ्चापि विषया स्वामिसन्निधौ प्रतिकूलतां त्यजन्ति । के इव ?, तार्किका इव । यथा—भगवत्प्रोच्चैरोपगता सौगतसाङ्ख्यशैवमीमांसककौलायताः (नैयायिकाः) पञ्चापि प्रामाणिकाः प्रतिहतमातिमत्त्वेन विगतमन्यता प्रतिकूलतां मुञ्चन्ति, तद्वदेतेऽपीति भाव ।

त्वत्पादावृतवः सर्वे, युगपत्पर्युपासते ।
आकालकृतकन्दर्प—साहायकभयादिव ॥ ९ ॥

अनु०—अनादि कालथी कामदेवने करली सहायना भयथी ज जाणे होय नहि तेम सघळी ऋतुओ एक साथे आवीने आपना चरणोमां सेवा करे छे (९)

अव०—त्वत्पा०—हे वीतराग ! त्वत्पादौ सर्वे वसन्ताद्या ऋतवो युगपदेकवारं पर्युपासते आश्रयन्ति, समवसरणसमीपस्थवनेषु सर्वऋतूनां पुष्पफलसम्भवात् पुष्पप्रकरे सर्वर्तु

१ × × × सर्वर्तुकुसुमसम्भवात् इति प्रत्यन्तरे ।

**अव०–जगत्प्र० हे जगत्प्रतीक्ष्य !, त्रैलोक्यपूज्य !, पक्षिणो जम्बूचाषमयूराद्या अज्ञाना अपि प्रदक्षिणं दक्षिणावर्त्तं यथा सुशकुनमित्यर्थः त्वाम् यान्ति; तेनेति गम्यं तेषां मानुष्यविवेकशास्त्रादिना महता का गतिर्नरकगतानां तेषां निर्गमोऽसम्भाव्य इत्यर्थः । ते के ?, ये त्वयि वामवृत्तयः वामा प्रतिकूला वृत्तिर्वर्त्तनं येषां ते प्रतिपक्षा इत्यर्थः ॥११॥**

त्रि०–हे जगत्प्रतीक्ष्य !, भुवनमहनीय !, भवन्तमासता सुरासुरनरा, किन्तु पक्षिण.–शकुना अपि प्रदक्षिणीकृत्य यान्ति–व्रजन्ति। ये तु पक्षिणामपेक्षया मनुष्यजन्मना स्पष्टेन्द्रियतया ज्ञानविज्ञानशालितया च महान्तोऽपि जगद्वत्सले त्वय्यपि वामवृत्तय प्रतिकूलाचरणास्तेषा का गति ? । इदमत्रहृदयम्–किल नरकगतिस्तावत्सर्वजघन्या, पर तत्रापि गताना त्वत्प्रातिकूल्यकारिणा तस्मादेनसो मुक्तिरसम्भाव्या, न चान्या तदधिका दुर्गतिरस्तीत्यहो तेषामधमत्वम् ।

तथा भगवतो हि विहरत. पवनः पृष्ठप्रतिष्ठ एव सञ्चरतीत्येतदेव भङ्ग्याऽभिदधाति—

**पञ्चेन्द्रियाणां दौःशील्यं, क भवेद्भवदन्तिके ।**
**एकेन्द्रियोऽपि यन्मुञ्चत्यनिलः प्रतिकूलताम्॥१२॥**

**अनु०–आपनी आगळ पञ्चेन्द्रियोनुं दुष्टपणुं तो होय ज क्यांथी ?, कारण के एकेन्द्रिय एवो वायु पण आपनी आगळ प्रतिकूलपणानो त्याग करे छे. (१२)**

अव०–सुग०–हे वीतराग ! माविस्वस्पादसंस्पर्शां भावी तव पादयोः स्पर्शो भ्यास्याऽवसरे षड्घटिकावधि यस्यास्तां सुवं सुराः पूजयन्ति केन ?, सुग० सुरभिजलवर्षणेन, पुनः केन ?, दिव्य० स्वस्तिकश्रीवत्साविरचनाविन्यासेन दत्ते रचि तस्ताद्दिव्यो यः पञ्चवर्णपुष्पप्रकरस्तेन, अतिशयद्वयम् ।

वि०–हे स्वामिन् ! सुरा शुभाशुभस्तावदास्ताममर्त्यपतिपूजितं भवन्तम्, यावद्भूमपि पूजयन्त्यर्चयन्ति, केन ?, सुगन्धिभिः सौरभ्य सम्भृतमाणपुटस्योदकस्य सलिलस्य वर्षेण वर्ष सेकस्तेन । तथा दिव्यानि मन्दारपारिजातादीनि पुष्पाणि सुमनांसि तदुत्करेण प्रकरेण । कां भुममित्याह–माविस्वत्पादसंस्पर्शां भावी भविष्यंस्त्व त्पादसंस्पर्शो यस्यां सा तथा । अयमाशय –किम 'भवध्या- सितमर्हद्भिस्तद्धि तीर्थं प्रचक्षत " इतिन्यायाद्भगवच्च्यासिता भूस्तीर्थं तदर्चनीयैवेत्यहो ! प्रिदशानां भगवति भक्त्यतिशय ।

तथा भगवन्तमवनौ विहरन्तं पक्षिण प्रदक्षिणयन्तीत्येतदेव युक्त्या स्तुतिकृदाह—

**जगत्प्रतीक्ष्य ! त्वां यान्ति, पक्षिणोऽपि प्रदक्षिणम्।**
**का गतिर्महता तेषां, त्वयि ये वामवृत्तयः ? ॥११॥**

**अनु०–हे जगत्पूज्य ! पक्षिओ पण आपने प्रदक्षिणा आपे छे, तो पछी आपना प्रत्ये प्रतिकूळ वर्तन राखनारा मोटा गणाता एवा वापडा मनुष्योनी शी गति समजवी ? ( ११ )**

तास्तरवो वृक्षा मूर्ध्ना-शिरसा नमन्ति, विहारावसरे एकेन्द्रियाणामपि भयरागादिसंज्ञावच्चमत्कारोऽपि सुसम्भवस्ततस्तेषां शिरः शिखरं कृतार्थं कृतकृत्यमस्ति, मिथ्यादृशां पुनः शिरः-शीर्षं व्यर्थमकार्यकरम् ॥ १३ ॥

वि०-हे भुवनमूर्द्धन्य !, स्वामिन्नासतां विकस्वरविवेकाः सुरनरादयः, किन्तु मुकुलितविशिष्टचैतन्यास्तरवः पादपा अपि मूर्ध्ना-उत्तमाङ्गेन प्रस्तावाङ्कवन्त नमन्ति-प्रणमन्ति उत्प्रेक्षते । तव सम्बन्धिना लोकोत्तरेण माहात्म्येन परमार्हन्त्यलक्षणेन चमत्कृता विस्मेरविस्मया इव । अतस्तेषामीषद्विवेकानामपि तत्रिभुवनप्रणते त्वयि प्रणतिपरं शिरः कृतार्थं नमस्यनमस्करणादेव कृतकृत्यम्, मिथ्यादृशां मिथ्यात्वमोहोपहतमतीनां पुनस्त्वय्युत्तानितशिरसां तद्व्यर्थं निरर्थकमेव, वनपादपेभ्योऽपि निर्विवेकास्ते मुधैव मस्तकशून्या भुवि भ्राम्यन्ति ।

**जघन्यतः कोटिसङ्ख्यास्त्वां सेवन्ते सुरासुराः ।**
**भाग्यसम्भारलभ्येऽर्थे, न मन्दा अप्युदासते॥१४॥**

अनु०-हे प्रभु ! जघन्यथी एक क्रोड देवो अने असुरो आपनी सेवा करे छे, कारण के भाग्यना समूहथी प्राप्त थयेल पदार्थने विषे मन्द आत्माओ पण उदासीनता धारण करता नथी. ( १४ )

अव०-जघ०-हे वीतराग !, सुरासुरा जघन्यतोऽपि

दाप्तनिश्चितासत्वपरीक्षकाणामेष तत्स्वभावोक्तिलक्षणः परीक्षाक्षेपडिण्डिम., केनाप्यस्य परीक्षा न विधेयेति प्रतिषेधार्थं पटहघोष इव, स च तत्त्वतोऽकीर्तिपटहघोष एव। कुत ?, यत्किलैहिकाल्पप्रयोजनमात्रसाधक कनकाद्युपादीयते तदपि तदर्थिभिः कषतापताडनच्छेदादिपरीक्षापूर्वकमेव, यस्माच्च सर्वोत्तमा परमपदावाप्तिरिष्यते, स कथ प्रेक्षापूर्वकारिभिरपरीक्षित परिगृहीष्यत इति यत्किञ्चिदेतत्।

एव च यौक्तिकोक्तिनिरुत्तर परोऽभ्युपगमकाम इवाचार्यमाह। साधु भगवन्नविसवादसुन्दरेय भवद्भणितिरेनमेव चार्थमसद्वर्ग्या अपि पठन्ति "अत एव निरीक्ष्य दुर्घटम्, जगतो जन्मविनाशडम्बरम्। न कदाचिदनीदृश जगत्, कथित नीतिरहस्यवेदिभि इति तस्मादिदमिह रहस्यम्। यत् किलास्मत्प्रभुर्न खलु जगन्ति सृजति, किन्तु विशिष्टज्ञानबलाद्विश्वविश्वतत्त्व जानीते।

आचार्य –

**सर्वभावेषु कर्तृत्वं, ज्ञातृत्वं यदि सम्मतम्।**
**मतं नः सन्ति सर्वज्ञा मुक्ताः कायभृतोऽपि च॥७॥**

**अनु०–सर्व पदार्थोनुं ज्ञातृत्व ए ज जो कर्तृत्व छे, तो ए वात अमने पण सम्मत छे; कारण के अमारो ए मत छे के सर्वज्ञ, मुक्त–अशरीरी (सिद्ध) छे अने शरीरधारी (अरिहंत) पण छे. ( ७ )**

वचनचातुरीप्रतिहते परे स्वयमाचार्य आह—

अव०—सर्व॰ यदि सर्वभावेषु पर्वतादिसकलपदार्थेषु ज्ञातृत्वमेव कर्तृत्वं सम्मतं तवाऽभीष्टम्, तर्हि नोऽस्माकं मतस्य सिद्धसाध्यता, न इति घण्टालालान्यायेनाग्रेऽपि सम्बध्यते, यतो नोऽस्माकमपि सर्वज्ञाः केवलालोकावलोकिताखिलसमावाः, मुक्ताः कर्मरहिताः, कायभृतो दग्धरज्जुप्राया युष्का(व्कस्या)दिना तद्भृतोऽपि सन्ति विजयन्ते कश्चित्कालमिति गम्यम् ॥ ७ ॥

साधु भोः !, सत्यमसि मेधापूर्वकारी !, यतो यदि भूभूधरादिषु सर्वेष्वपि चराचरेषु भावेषु भवतो निबाधस्य ज्ञातृत्वमेव कर्तृत्व संमतम्; ततोऽस्माकमेवमेवास्तुतरां संमतम्। यतोऽस्मदाप्ता अपि भगवन्तो विमलकेवलालोकदर्पणसंक्रान्तविश्वविश्वस्वरूपाव लोकिनस्तत्र सन्ति सर्वथा। भवबीजाङ्कुरजनकरागाद्यन्ताभावेन च मुक्ता तथाविधमघोपग्राहिकर्मचतुष्टयपारतन्त्र्यात् कश्चित्कालं का यभृतश्चेति न किञ्चिदसङ्गतम्।

एवं स्तुतिकृद्भगवद्गुणमहाद्रुन्मीलनदमकविवेकानभ्युपपत्तिपरान्परानाथाय प्रकृते वीतरागस्तवे योजयन्नाह—

सृष्टिवादकुहेवाकमुन्मुच्येत्यप्रमाणकम्।
त्वच्छासने रमन्ते ते, येषां नाथ! प्रसीदसि॥ ८॥

अनु०—हे नाथ! आप जेमना उपर प्रसन्न छो,

ते आत्माओ प्रमाण रहित एवा सृष्टिमर्जनवादना दुराग्रहने छोडीने आपना शासनने विषे रमण करे छे. ( ८ )

उपसंहरन्त आहुः—

अव०—सृष्टि०हे वीतराग ! इति पूर्वोक्तप्रकारेणाप्रमाणकं युक्तिरहितम् । सृ० जगत्सर्गवादकदाग्रहमुन्मुच्य परित्यज्य, त्वच्छासने त्वदागमे, ते पुरुषा रमन्ते येषां त्व प्रसीदसि प्रसन्नोऽसीतिभावः ॥ ८ ॥

वि०—हे विहितकुमतप्रमाथ नाथ !, पूर्वोक्तप्रकारेण पुरुषविशेषकृताया सृष्टेर्वादः—सृष्टिवाद स एवासद्ग्रहरूपत्वेन कुहेवाककदभिनिवेशस्तमुन्मुच्य—परित्यज्य, किमित्याह—इति प्रागुक्तयुक्त्या, अप्रमाणक प्रमाणानुपपन्नम्, प्रमाणोपपन्नश्चतुर्दशरज्ज्वात्मकस्यापि लोकस्यायमेव वादो, यदुत "निष्पादितो न केनापि, न धृत केनचिच्च स । स्वय सिद्धो निराधारो, गगने किन्त्ववस्थित· ॥ १ ॥" इति । एवविधे च त्वच्छासने—त्वत्प्रवचने, त एव रमन्ते—इदमेव तत्त्वमिति स्वहृदा सवाद्य त एव मोदन्ते, येषा सुकृतप्राप्यप्रसादस्त्वं प्रसीदसि—प्रसादसुमुखो भवसि । इयता च सर्वात्मना त्वत्प्रसादलभ्या एव शुभसम्पदो भव्याङ्गभाजामित्यर्थापतितम् ।

इति श्रीवीतरागस्तोत्रे जगत्कर्तृत्वनिरासस्य सप्तमप्रकाशस्य पदयोजना ।

इति सप्तमजगत्कर्तृत्वनिरासप्रकाशावचूर्णि· ।

ननु सिद्धं स्वयं सिद्धं जगत् तत्र किमेकान्तनित्यमुतैकान्तानित्यं नित्यानित्यं चेत्याशङ्कायामुभयकुले विपक्षिकुले स्तुतिकृदाह–

---

सत्त्वस्यैकान्तनित्यत्वे, कृतनाशाकृतागमौ ।
स्यातामेकान्तनाशेऽपि, कृतनाशाकृतागमौ ॥१॥

अनु०–पदार्थनु एकान्त नित्यपणु मानवामां कृतनाश अने अकृतागम नामना बे दोष छे एकान्त अनित्यपणु मानवामां पण कृतनाश अने अकृतागम नामना बे दोष रहेला छे (१)

अथ तद्वचनानामप्रामाण्यमाहुः—

अव०–सत्त्व–हे वीतराग ! त्वया सत्त्वं वस्तुतत्त्वं नित्यानित्यात्मकं स्याद्वादमयं केवलज्ञानेन दृष्टं तथैव चाऽभिहितम्, तस्य च साङ्ख्या एकान्तेन नित्यत्वमङ्गीकुर्वते, तथा सति कृतनाशाकृतागमनामानौ दोषौ स्याताम् । तथाहि–घटो यदि सर्वदा निष्पन्नसिद्धस्तदा कृतनाशः, कृत कुम्भकारस्य मृदानयनक्षेदनचक्रारोपणाद्युपक्रमस्तस्य नाशो नैरर्थक्यं भवति, घटस्य नित्यं निष्पन्नत्वात् । अथाकृतागमः, यथा–यदि सर्वं सर्वदापि नित्यम्, तदा घटाकारोऽपि नित्यः, तथा च सति मृत्पिण्डे पूर्वमदृष्टो घटाकारो नित्यत्वादकृत एवागतः, एवं चाकृतागमदूषणं स्यात् । तथा सत्त्वस्य द्रव्य

स्य बौद्धाः एकान्तनाशमेकान्तेन विनश्वरत्वं मन्यन्ते, एवमपि कृतनाशाकृतागमौ स्याताम् । यथैकस्मिन्क्षणे ( यद् ) मृत्पिण्डद्रव्यमभूत्तद् द्वितीयक्षणे सर्वथा विनष्टम्, ततः कुम्भकारेण तत्र कृतोऽपि घटाकारो नश्यति, इति कृतनाशः । तथा मृद्द्रव्यं यदि निःशेषं नष्टम्,तर्हि स्थासकोशकुशूलबुघ्नोदरकर्णादि कुलालेन क्रियते दृश्यते च चक्षुषा, अतोऽकृतागमः १

वि०—उत्पादव्ययध्रौव्यात्मक वस्तुतत्त्वं सत्त्वम्, तस्यैकान्तनित्यत्वेऽभ्युपगम्यमाने कृतनाशाकृतागमो स्याताम् । तथाहि—सा खयैरप्रच्युतानुत्पन्नस्थिरैकस्वभाव कूटस्थनित्य वस्त्वभ्युपगम्यते । तच्च यद्येवं स्यात्तदा वस्तुनि घटादौ कुम्भकारादिकृताना पर्यायाणा सर्वथा नाश एव स्यात्, एतच्च प्रत्यक्षविरुद्धम् । यतः—कुम्भकारादिभिर्निर्मीयमाणा. स्थासकोशकुशूलपृथुबुघ्नोदराद्याकारा कृशाकृशरूपतया क्षणे क्षणे दरीदृश्यन्ते । अतस्तेषा पर्यायाणामाविद्वदङ्गनाप्रतीताना विनाश एव स्यात् । ते च यदि न कृतास्तदा घटोऽप्यकृत एव स्यात् । कृतेष्वेव च तेषु घटोऽपि कृत । एव च सति नित्यताक्षतिः । तथा अकृतागमसङ्गमोऽपि स्यात् । तथाहि—पर्यायास्तावत्तन्मते कूटस्थनित्यत्वादेव केनचिन्न कृता' । अकृता एव च समुपस्थिता. । यदि कृता. स्युस्तदा घटस्यापि कृतकत्वे नित्य(त्व) पक्ष—क्षति । एतच्चानुष्णोऽग्निरित्यादिवत् प्रत्यक्षविलक्षणमकृतागमस्वरूप क सुधीः श्रद्धीत । तथा ताथागतपरिकल्पिते स्वलक्षणस्य सर्वथा क्षणिकैकान्तपक्षेऽपि कृतनाशाकृतागमौ स्थिरस्थेमा-

ममवक्तव्यमानौ दुर्निवारावेव स्याताम् । यत—सर्वथैव सदमिमते वस्तुनि स्वीक्रियमाणे पर्यायाणां निराधारत्वेन स्यातुमशक्तौ घटादेरनुत्पाद एव मसज्येत । तथाहि—पूर्वक्षणे यद्वद् घटादिद्रव्यमासीत् तच्च द्वितीयक्षणे सर्वथा निर्हेतुक विनष्टमेव । तत् कस्य स्थासकोशकुशूलादिसंस्काराधाम विघातुमुचितम् ? । इत्यन्ते च प्रत्यक्षादि प्रमाणे संस्कारा, भवद्भन्मते कृता भप्यकृताः स्यु, तथा निरन्वयनश्वरे वस्तुनि संस्काराणामुत्पादयितुमशक्यत्वात् कुत स्थासादीनां पर्यायाणामवकाश ? अत प्रतीयते—तन्मतेऽनित्यमेव गमेपादिकान्यथायातुपनत एवाकृतागम । एव च स्वपरपक्षयोरपक्ष पातेनैव व्यवस्थित नित्यानित्यात्मकं वस्तुतत्त्वम् । प्रयोगश्चायम्—विवादास्पदीभूतं वस्तुतत्त्व नित्यानित्यात्मकम् कृतनाशाकृतागमादिदोषाभावस्यान्यथानुपपत्तेः । न च दृष्टान्तमन्तरेण हेतोर्न गमकत्वम्, अन्तर्व्याप्त्यैव; साध्यसिद्धेः । सात्मक जीवच्छरीरं प्राणादिमत्त्वात् इत्यादिवदिति ।

ननु भवतु नामवस्तु नित्यानित्यात्मकम् परमात्मतत्त्वमेव रूपमेवाभ्युपगम्यमानमौचितीमञ्चतीत्याशङ्क्याह—

**आत्मन्येकान्तनित्ये स्यान्न भोगः सुखदुःखयोः ।**
**एकान्तानित्यरूपेऽपि, न भोगः सुखदुःखयोः ॥२॥**

**अनु०—आत्माने एकान्त नित्य मानवामां सुख दुःखनो भोग घटतो नथी एकान्त अनित्य स्वरूप मानवामां पण सुख दुःखनो भोग घटतो नथी (२)**

एवं सामान्येन नित्यानित्यत्वमभिधायात्मनोऽपि तद्दर्शयति—

अव०—आत्म० हे वीतराग ! आत्मनि जीवे एकान्त-नित्येऽङ्गीक्रियमाणे सुखदुःखयोर्भोगो न स्यात्, कुतः ?, यदि सुखं भोक्तुमारब्धं तर्हि सर्वदापि सुखमेव; यदि दुःखं तदा तदेव भवेत्। अन्यथा सुखमुपभुज्य दुःखस्य, दुःखं चोपभुज्य सुखस्योपभोग्यात्मा सुखितया विनश्य दुःखि-तयोत्पन्नस्तया वा विनश्य सुखितयोत्पाद(सुखितयोत्पन्न) इति (न स्यात्)। एकान्तानित्यरूपेऽप्यात्मनि सुखदुःखयो-र्भोगो न स्यात्, उत्पत्त्यनन्तरं क्षणविनष्टत्वात्। सुखदुःखे तु चन्दनाङ्गनारोगकण्टकादिसाधनयोर्भोगोपभोगाभ्या बहु-क्षणनिर्वर्त्याभ्या साध्य इति ॥ २ ॥

वि०—एकान्तनित्यत्वे ह्यात्मन सत्यत्वेन मन्यमाने सुखदु ख-योर्भोगो न घटामटाट्यते। तथाहि—एकान्तनित्य स ह्यात्मा सुख-दु खे क्रमेण भुङ्क्ते युगपद्वा ?, न तावत्क्रमेण, नित्यत्वव्याघातात्, नहि येनैव स्वभावेन दु ख भुङ्क्ते, तेनैव सुखम्, तयोरेकत्वप्रसङ्गात्, स्वभावभेदे चैकस्वभावनित्यत्वक्षति (च नित्यैकस्वभावक्षति.) युग-पच्चेत् ?, तदपि न, नहि कदाचिदपि छायातपयोरिव परस्परपरि-हारविरोधव्याघ्राघातयो सुखदु खयोर्युगपदनुभव. सम्भवति। त-स्मादेकान्तनित्ये जीवस्वतत्त्वे न कदाचिदपि सुखदु खोपभोग·। यद्येव तर्ह्येकान्तानित्यात्मपक्षकक्षीकारबद्धकक्ष सुगतमतमेवानुमतम-

स्त्विति चेत् ?, तन्निराचिकीर्षुराह–एकान्तेत्यादि । एकान्तनित्य-स्वभावऽप्यात्मन्यभ्युपगम्यमाने सुखदुःखयोरभोगमात्त्वमेवास्य स्यात् । तथाहि–एकान्तक्षणिको ह्यात्मा क्रमेण चेत्सुखदुःखे भुङ्क्ते तदा क्षणिकत्वक्षतिः । क्रमो हि परिपाटी, सा च सातत्यमन्तरेण न सम्भवति, तदभिमतं च क्षणिकत्वमेकक्षणरूपम्, तत्र क्रमेण सुखदुःखोपभोगः । युगपच्चेत्तदा पूर्वविरोध एव बाधाविधायि । तस्मान्नित्यानित्यरूप आत्मा, सुखदुःखोपभोगान्यथानुपपत्तेरित्यनुमानान्नित्यानित्यात्मसिद्धि ।

किञ्चैकान्तनित्यैकान्तानित्यपक्षकक्षीकारसारमते यद् दूषणान्तरात्मनोऽवतरति तदाह—

पुण्यपापे बन्धमोक्षौ, न नित्यैकान्तदर्शने ।
पुण्यपापे बन्धमोक्षौ, नानित्यैकान्तदर्शने ॥ ३ ॥

अनु०–एकान्त नित्य दर्शनमां पुण्य पाप अने बन्ध मोक्ष घटतां नथी एकान्ते अनित्य-दर्शनमां पण पुण्य पाप अने बन्ध मोक्ष घटतां नथी (३)

दोषान्तरमाह—

अव०—हे वीतराग ! नित्यैकान्तदर्शने आत्मनि नित्यत्वाङ्गीकारसारमते पुण्यपापे बन्धमोक्षौ कर्मबन्धतत्क्षयौ च न स्युः । तथाहि–आत्मनो यदि पुण्यं तर्हि पुण्यमेव, यदि पापं तर्हि पापमेव, नित्यत्वात् । यथा–शशिन औज्ज्वल्यं तर्हि

**न कदाचित् कालुष्यम्, राहोर्यदि कालुष्य तर्हि सर्वदापि तदेव। एवं यदि बन्धस्तर्हि बन्ध एव, यथा मेरोः पृथ्वीपीठेन सह। यदि मोक्षस्तर्हि स एव, न तु बन्धः। [1]तथाऽनित्यैकान्तदर्शने क्षणक्षयिजीवमतेऽपि पुण्यपापे बन्धमोक्षौ च न सम्भवन्ति, क्रमेण तेषा स्वीकारे चतुःक्षणस्थायित्वं स्यात्, युगपद्यदि तदा छायातपवज्जलाग्निवच्च विरुद्धानां तेषां कथमेकत्रात्मन्यवस्थानं स्यादिति ॥ ३ ॥**

वि०—न तावन्नित्यैकान्तात्ममते पुण्यपापे सम्भवतः। यतो-नित्यो ह्यात्मा पुण्यपापानुपाती स्वभावभेदमन्तरा न सम्भवति। पुण्यपापाभ्या च पूर्व परिणाम परित्याज्योत्तरपरिणामवानात्मा निर्मीयते। परिणामानित्यत्व च नित्यत्वक्षतिकारि। "यदि पूर्वपरिणामपरिहारेणोत्तरपरिणामाश्रयण तदा किं नामात्मनो नित्यत्वव्यत्यासकरम्[?], परिणामयोरेवानित्यत्वात्। यद्यन्यस्या नित्यतयाऽन्यस्यानित्यत्वम्, तदा अन्यस्योत्पाटित चक्षुरन्यस्यान्धत्वमागतमित्यपि किं न स्यात्[?]" इति चेत्, तन्न, परिणामपरिणामवतो कथञ्चिदभेदात्। कथञ्चिदभेद एव कथमिति चेत्[?], एतद् ब्रूम.। परिणामपरिणामिनौ कथञ्चिदभिन्नौ, परिणामोपकारापकाराभ्या परिणामिनोऽप्युपकारापकारप्रवृत्त्युपपत्ते। तस्मान्नित्यैकान्तपक्षे न पुण्यपापोदयः समीचीनतामञ्चति। किञ्च–नित्यैकान्ते बन्धमोक्षावपि न युज्यते। यदि बन्धस्वभावमपहाय मुक्तिमाकलयति तदा स्वभावपरिभवे कथ

१ "यथा मनस उक्त च एवम्। "मन एकडवक्कडओ जइ कामइ थिर थाइ। चदिलिहा वउलीहडी तिदणि ऊभि बाहु ॥१॥" इति मुद्रितपुस्तकेऽधिक दृश्यते।

मानित्यता । यो हि बद्धः, स बद्ध एव, एवं सति सर्वदा मुक्तिनि स्यः एव । तथा च सति कः पापमपहाय पुण्यपण्यं नैपुण्येन संगृ ह्णीयात् । कथास्माराराममविरामविश्रामेण माध्यस्थ्यमवलम्ब्य सम्यक् तत्त्वोनिपातमद्वर्गित कुर्यात् । एवं च सति सर्वधर्मनिस्म एव । तथा च सर्वधाराम्भाविकुम्भसम्भवरामिर्मावो नित्यैकान्तवादिभिरेवोक्त स्यात् । तस्मादुक्तमेवाकम्– 'पुण्यपाप बन्धमोक्षौ न नित्यैकान्त दर्शने" इति । तथाऽनित्यैकान्तदर्शनेऽपि न पुण्यापुण्यसम्भवः । कथमिति चेत् ?, उच्यते-क्षणिको ह्यात्मा पुण्यापुण्यादिक क्रमेणाऽनुभवीत युगपद्वा ?, क्रमेण चेत्तदा यस्मिन् क्षणे पुण्यम्, तदा नापुण्यमाक्रान्तम् एव च क्षणिकत्वक्षतिः; द्वितीयमगपुण्यक्षण मावदात्मनोऽनवस्थानात् । युगपत्पक्षस्तु विरोधबाधाविधुर एव । एवं बन्धमोक्षावप्येकान्तानित्यपक्षे विचार्यमाणौ विशीर्येते । अत एकान्तनित्यानित्यपक्षौ न क्षेमङ्करौ तस्मान्नित्यानित्य आत्मा, पुण्यपापबन्धमोक्षायन्यथानुपपत्तेरिति ।

एव च सत्त्वस्यैकान्तनित्यतायामेकान्तानित्यतायां च न केवलं कृतनाशाकृतागमसन्निपातविनिपात एव । किन्त्वात्मनोऽपि तथात्वाभ्युपगमे न केवलं सुखदुःखभोगपुण्यपापबन्धमोक्षव्यतिरेव, मावन्नित्यस्याप्यात्मादिवस्तुस्तोमस्य नित्यानित्यतायामर्थक्रियमा नासामकाण्डकूष्माण्डोद्भवलोवरमनर्थान्तरमपि निपततीत्याह–

क्रमाक्रमाभ्यां नित्यानां, युज्यतेऽर्थक्रिया न हि ।
एकान्तक्षणिकत्वेऽपि, युज्यतेऽर्थक्रिया न हि ॥४॥

**अनु०-नित्य पदार्थोने विषे क्रमथी के अक्रमथी अर्थक्रिया घटती नथी, अने एकान्त-क्षणिक-पक्षमां पण क्रमथी के अक्रमथी अर्थक्रिया घटती ज नथी. ४**

अन्यत् किम् ?, जीवाजीवादिपदार्थानां नित्यानित्यतां विना अर्थक्रियैव न स्यादित्याह—

**अव-क्रमा०** हे वीतराग ! नित्यानां वस्तूनां क्रमाक्रमाभ्यामर्थक्रिया न युज्यते–न घटते, यथा–यदि घटो नित्यस्तदा जलाहरणं न करोति, कुतः ?, नित्य एकरूप एव; न तु रिक्तभृताद्यवस्थावैचित्र्यं भजते। तथा पदार्थानामेकान्तक्षणिकत्वे विनश्वरत्वेऽप्यर्थक्रिया जलाहरणादिका न घटते, बहुक्षणनिष्पाद्यत्वात्तस्याः; अर्थक्रियाया अभावे चासत्त्वमेव ॥४॥

एतदेव निगमयन्नाह—

वि०-अप्रच्युतानुत्पन्नस्थिरैकरूपाणा नित्याना क्रमेणाक्रमेणाप्यर्थक्रियाकारित्व न युज्यते। तथाहि—नास्ति नित्यैकरूप–आत्मादिरनर्थक्रियाकारित्वात्, यद्यदनर्थक्रियाकारि तत्तन्नास्तीत्युपलब्धम्, यथा–खपुष्पम्, अनर्थक्रियाकारी च नित्यैकरूप आत्मादि, तस्मान्नास्तीति निश्चीयते। न चानर्थक्रियाकारित्वादित्यय हेतुरसिद्धः। अर्थक्रियाकारित्व हि कार्यकर्तृत्वमुच्यते। तच्चात्मादेः क्रमेण यौगपद्येन वा ?, प्रकारान्तराभावात्। न तावत्क्रमेण घटते, क्रमो हि द्विधा, देशक्रम कालक्रमश्च। न तावद्देशक्रमेण कुर्यात्, देशक्रमो ह्येकत्र देशे कार्यमेक कृत्वा पुनर्देशान्तरेऽन्यकार्यकरण-

मुच्यते । न च नित्यैकस्वभावस्यैतत्सम्भूतः क्रम सम्भाव्यते, नित्यैकस्वभावताव्याघातप्रसङ्गात् । यदा ह्येकत्र देशे एक कार्यम्, अपरं नान्यत्र करोति, तदा पूर्वस्मिन् देशे पूर्वकार्यकरणसामर्थ्यमेव (पूर्वकार्यकरणस्यैव सामर्थ्यम्) नोत्तरकार्यकरणसामर्थ्यम्, अन्यथा पूर्वस्मिन्नेव देशे तस्याऽप्युत्पत्तिप्रसङ्ग, तथा च पूर्वोत्तरदेशयोः स्वभावभेदान्नित्यैकरूपताव्याघातो भवेदेव । ननु नित्यैकस्वभावस्य पदार्थस्यैकत्र देशे सर्वकार्योत्पादनसामर्थ्यसद्भावेऽपि नोत्तरोत्तरदेशभाविकार्यं भवेत् । सहकारिकारणाभावादिति चेत् ?, उच्यते–सहकारिणः किं तस्योपकारकत्वेनैकार्थकारित्वेन वा ? । प्रथमपक्षे किम सावुपकारस्ततोऽव्यतिरिक्तः, व्यतिरिक्तः कथञ्चिद्व्यतिरिक्तो वा ?; नाद्यस्तदन्तराभावात् । यद्यव्यतिरिक्तस्तदा नित्यताहानि । न सदुपकारादनित्यादभिन्नस्य भावस्य नित्यत्वं नाम, तत्स्वरूपवत् । नैवैकान्तवादाभावश्च योगस्य । अथ व्यतिरिक्तो विधीयते, तर्हि तस्येति व्यपदेशाभाव सम्बन्धाभावात् । न च सम्बन्धाभावोऽसिद्धः । स हि संयोगलक्षणस्तादात्म्यलक्षणः समवायलक्षण उपकार्योपकारकभावलक्षणोऽदृष्टलक्षणो वा । न तावत्संयोगः, तस्य गुणत्वेन द्रव्यवृत्तित्वात् 'द्रव्ययोरेव संयोग' इतिवचनात् । नापि तादात्म्यम् तस्यानभ्युपगमादन्यथा अनेकान्तवादप्रवेशो योगस्य । नापि समवायलक्षणः, स ह्येक सर्वगतश्च परैरिष्यते । कथ तद्व्यापारेव तस्य भाव नान्यत्रेति । अथ समवायस्य सर्वगतत्वाविशेषेऽपि समवायिनां प्रतिनियमः प्रत्यासत्तिविशेषसद्भावादिष्यते स कोऽन्योऽन्यत्र कथञ्चित्तादात्म्यात् । नाप्युपकार्योपकारकलक्षण., उपकारकेण ह्युप

कार्यस्योपकार' क्रियमाणोऽव्यतिरिक्तो व्यतिरिक्तो वा ?, अव्यतिरेके नित्यत्वमपि(नित्यस्यापि) कार्यत्वम्, व्यतिरेके सम्बन्धासिद्धिः। अथोपकारेणाप्युपकारान्तरं विधीयते, तर्हि तेनाऽप्यपर तेनाऽप्यपरमित्यनवस्था। नाप्यदृष्टलक्षण., तस्य सम्बन्धरूपताऽभावात्। तन्न व्यतिरेकपक्षेऽपि घटते। कथञ्चित्पक्षोऽपि न श्रेयान्, उभयपक्षनिक्षिप्तदोषानुषङ्गात्। तन्नोपकारकत्वेन सहकारिण' स्यु, नाप्येकार्थकारित्वेन, न खलु स्वरूपेणाकारक पररूपेण कारकम्, स्वयमकारकस्य पररूपेणाप्यकारकत्वात्, न हि गोधूमबीज स्वय यवाङ्कुरस्याकारक यवसहितमपि तस्य कारक नाम। किञ्च—यदि सहकारिभिर्नित्यस्य न किञ्चित्क्रियते, तर्हि कथ तेषामपेक्षा, अनुपकारिणामपेक्षाऽयोगात्। ननु न नित्यस्य सहकारिभि' किञ्चित्क्रियते, तेन वा तेषाम्, किन्तु सह मिलित्वा कार्यमेव विधीयते। 'सह कुर्वन्ति' सहकारिण इति व्युत्पत्तेरिति चेत् ?, उच्यते—व्यस्ताना तेषा कार्यकारणसामर्थ्यमस्ति न वा ?, यद्यस्ति, समुदिता एव कुर्वन्तीति नियमो न लभ्यते, व्यस्ता अपि कुर्वन्ति। अथ नास्ति कुतस्तद्भवेत्, कारणाभावात्; अन्यथाऽनित्यत्वप्रसङ्गात्। ननु न नित्यस्य पदार्थस्य कुतश्चित्कार्यकरणसामर्थ्यमुपजायते, येन तस्यानित्यत्वमापद्यते, किन्तु तस्येत्थम्भूतस्वभावो येन सहकारिसहित एव कार्यं करोति, नान्यदिति चेत् ?, स स्वभावस्तस्य भावस्य निर्हेतुक सहेतुको वा ?, प्रथमपक्षे—नियते देशे नियते काले च तस्य सद्भावो न स्यात्, न खल्वाकस्मिकस्य तथासद्भाव, कारणाधीनत्वात्तथाभावस्य। अथ सहेतुक, स यदि

सहकारिभ्योऽन्यतो वा भवेत्, स चेत्तस्मात्तदनर्थान्तरम्, तदा तस्यानित्यत्वम् । अर्थान्तरपक्षस्य कथञ्चित्पक्षस्य च पूर्वमेव निराकृतत्वात् । किञ्च–सहकारिणः किं नित्या अभ्युपगम्यन्ते, अनित्या, नित्यानित्यरूपा वा ? । प्रथमे विकल्पे नित्यवत् प्रसङ्गः द्वितीये कार्यवैचित्र्यम्, तृतीयस्तु न श्रेयान्, अनभ्युपगमात्, तत्र नित्यस्य पदार्थस्य देशक्रमेण कार्यकारित्वं घटते । नापि कालक्रमेण, कालक्रमस्यापि नित्यैकस्वभावस्य भावस्यासम्भवात् । स ह्येकदा काले कार्यं कृत्वा पुनः कालान्तरे कार्यकरणमुच्यते । न च नित्यैकस्वभावस्य भावस्यैवम्भूतः कालक्रमो घटते, सर्वथा नित्यत्वस्याभावप्रसङ्गादिति कालक्रमेणापि न कार्यकारित्वं घटते । नापि यौगपद्येन, यौगपद्य ह्येकस्मिन् क्षणे कालान्तरभाविसकलकार्यकारित्वम्, तत्र च क्रमेण कार्योपलम्भो न स्यात्, अस्ति च कार्योपलम्भः, तथाहि–अन्तस्तावदात्मनः स्रक्चन्दनवनितादिसामग्रीसन्निपाते सुखलक्षणं कार्यमुपलभ्यते अहिकण्टकविषादिसन्निधौ तु दुःखम् न पुनर्यस्मिन्नेव क्षणे सौख्यं तस्मिन्नेव क्षणे दुःखम् तथोपलम्भाभावात्, उभयसामग्र्यसन्निधाने त्वौदासीन्यम् । तथा बहिरपि मृत्पिण्डात् कुम्भकारव्यापारचक्रचीवरादिसामग्रीसन्निपाते घटस्ततो घटी ततः कालान्तरे करकादिकमिति, न पुनरेकस्मिन्नेव क्षणे सर्वम्, तथोपलम्भाभावात् । किञ्च–यदि यौगपद्येन कार्यं करोति तर्हि कस्मिंश्चन समये सकलस्य कार्यकदम्बकस्य निष्पादितत्वात् द्वितीयादिक्षणे कार्याकर्तृत्वेन अवस्तुत्वं स्यात् । ननु च पुरुषस्य चेतनैवार्थक्रिया न पुनः तद्व्यतिरिक्तस्य प्रमाणप्रमितिलक्षणस्य

कार्यस्य अन्यस्य वा अयनादिलक्षणस्य कर्तृत्वमिष्यते, तस्य प्रधानहेतुकत्वात्। न च चेतना पुंसोऽर्थान्तरमेव, तस्य चेतनालक्षणत्वात्। चैतन्य स्वरूप पुरुषस्य इति वचनात्, न चानित्या चेतना पुरुषस्वभावस्तन्नित्यत्ववत् (?), सा नित्या तस्या प्रधानस्वभावत्वेन पुरुषकल्पनावैफल्यप्रसङ्गात् तदनित्यत्वप्रसङ्गाच्च सुखादिवत् (?)। न च नित्यायाश्चेतनाया' परस्यार्थक्रियात्व विरुध्यते, धात्वर्थरूपाया क्रियाया' प्रतिघाताभावात्, सत्त्वावत्। ततोऽर्थक्रियास्वभावत्वादात्मनो वस्तुत्वमेव। न ह्यर्थक्रियाकारणस्यैव वस्तुत्वम्, अर्थक्रियाया' स्वयमवस्तुत्वापत्ते, तत्रार्थक्रियान्तराभावात्. अन्यथाऽनवस्थाप्रसङ्गात्। स्वतोऽर्थक्रियाया वस्तुत्वस्वभावत्वे पुरुषस्यापि स्वत सततमर्थक्रियास्वभावत्वान्नित्य वस्तुत्वमस्तु, क्रियाविरहेऽपि नित्यकारकत्वस्यापि घटनादिति साङ्ख्य कश्चित्। सोऽपि न दक्षः, प्रमाणविरोधात्। अध्यक्षतो लिङ्गजादेर्वा नित्यार्थक्रियायाः कदाचिदपरिवेदनात्। स्वसंवेदनमेव नित्यचेतनार्थक्रियां परिच्छिनत्ति, इति चेत् ?, न, तथा तद्बुद्ध्याऽनध्यवसायात्। न खलु बुद्ध्याऽनध्यवसिता चेतना पुरुषश्चेतयते, बुद्धिपरिकल्पनावैयर्थ्यप्रसङ्गात्। सर्वस्य शब्दादेर्विषयस्य बुद्ध्यध्यवसितस्यैव पुंसां संवेद्यत्वसिद्धे, स्यान्मतम् !, न चेतना नाम विषयभूताऽर्थान्तरमात्मनोऽस्ति या बुद्ध्याऽध्यवसीयते, तस्यास्तत्स्वरूपत्वात्, स्वत'-प्रकाशनाच्चेति, तदप्यनुपपन्नम्, तदर्थक्रियाकारित्वायोगात्, न ह्यर्थक्रियावत् स्वरूपमेव सदवस्थाप्यर्थक्रिया प्रसिद्धाऽस्ति (?)। तस्याः पूर्वाकारपरित्यागेनोत्तराकारोपादानेन च तस्मिन् परत्र च प्रतीतेः।

सोऽयं पूर्वापरस्वभावपरिहारावाप्तिलक्षणार्थक्रियां कौटस्थ्येऽपि ब्रुवाणः कथमनुन्मत्तः स्यात् ? । तत एकान्तनित्यत्वे प्रेक्षावद्भिरर्थक्रियासमर्थत्वं यथा यथा विचार्यते तथा तथा विशीर्यते । अथ बौद्धा आहुः–नित्यैकान्ते पूर्वोक्तप्रकारेणार्थक्रियाकारित्वस्यासम्भवादस्मत्पक्षः एव क्षणिकैकान्तलक्षणः श्रेयान्, तदपि न तत्रापि तस्यासिद्धेः । तथाहि–नास्ति क्षणिकैकान्तोऽनर्थक्रियाकारित्वात्, यदनर्थक्रियाकारि तन्नास्तीत्युपलब्धम्, यथा ब्रह्माद्वैतम्, अनर्थक्रियाकारी च क्षणिकैकान्त, तस्मान्नास्तीति निश्चीयते । न चानर्थक्रियाकारित्वादित्ययं हेतुरसिद्धः, यतः क्षणिकैकान्ते (सत्त्व क्षणिकैकान्ते) विषमानत्वात्, तथाहि–यद्यसौ क्षणिकः पदार्थः स्वासाधनिकां क्रमेण करोति, यौगपद्येन, उभयरूपेण वा ?; न तावत्क्रमेण क्षणस्यैव वा स्वं कार्यं कर्तुमलम्, तस्याक्रमत्वात्, न चाक्रमस्यापि क्रमेण कार्यकारित्वं घटते सर्वथा नित्यवत् । नापि यौगपद्येन, एकस्मिन्नेव क्षणे सकलकार्यकरणस्वभावस्य निष्पादितत्वात् द्वितीयादिक्षणे क्षणिकस्य तस्यासत्त्वात्सकलशून्यता स्यात्, न चैवम् । किञ्च यदि यौगपद्येन कार्यं करोति तर्हि क्रमेण कार्योपलम्भो न स्यात्, अपि च कुम्भकार एकस्मिन् क्षणे घटं कुर्वन्नुपलभ्यते, द्वितीयादौ च पटादिकमिति । नाप्युभयरूपेण, उभयपक्षनिक्षिप्तदोषानुषङ्गात् । करोतु वा यथा कथञ्चित् किं विद्यमानोऽविद्यमान उभयरूपो वा करोति ? न तावद्विद्यमानः क्षणमात्रस्थायित्वात् । किञ्च–यदि तत्रैव क्षणिकः पदार्थः कार्यं करोति तर्हि सर्वोऽप्ययमेकक्षणवर्ति स्यात्, करणकाल एव सकलस्यापरापरसन्तानस्य भवनात्, तेन

च सन्तानाभावः स्यात् । नाप्यविद्यमानश्चिरतरविनष्टवत्, नाप्युभयरूपः, उभयपक्षनिक्षिप्तदोषानुषङ्गात् । एवमेकान्तक्षणिकत्वपक्षेऽपि नार्थक्रियाकारित्व घटाकोटिसटङ्कमाटीकते । तस्मादेकान्तमभिनिवेश परतीर्थिकाना कदाशापाश एव ।

एतदेव निगमयन्नाह—

**यदा तु नित्यानित्यत्वरूपता वस्तुनो भवेत् ।**
**यथात्थ भगवन्नैव, तथा दोषोऽस्ति कश्चन ॥ ५ ॥**

**अनु०-हे भगवन् ! आपे कही छे ते रीते जो वस्तुनी नित्यानित्यस्वरूपता होय, तोज कोई पण प्रकारनो दोष आवतो नथी. (५)**

पूर्वोक्तमेव निगमयन्त आहुः—

**अव०-यदा० यदा तु पुनः स्तम्भकुम्भाम्भोरुहादेर्वस्तुनो नित्यानित्यत्वरूपता कथञ्चिन्नित्यकथञ्चिदनित्यस्वभावता भवेत्, तदा कश्चन दोषो विरोधादिर्नैव नास्त्येव हे भगवन् ! यथा त्वमात्थ कथितवांस्तथैव, न दोष इत्यर्थः ।**

वि०—यदा पुनर्वस्तुनो विवादास्पदीभूतस्य स्तम्भकुम्भरम्भाम्भोरुहादेर्नित्यानित्यरूपता भवेत्, तदा नैव दोषः कालुष्य[1]लक्ष्यता काचन । ननु नित्यानित्यत्व को वै न मन्यते । परमाणुरूपतया

---

१ —'लक्षता' इति प्रत्यन्तरे । २ – सामान्यविशेषात्मकस्य वस्तुनः प्रमाणगोचरतया मीमांसकैरभ्युपगमात् ।

नित्यस्य, कार्यरूपतया चानित्यस्य स्तम्भादेर्वस्तुनो वैशेषिकै परस्परनिरपेक्षतया मीमांसकैश्चाभ्युपगमात्, अस्त्येवमिति चेदित्या शङ्कामपाकर्तुं भगवन्त साक्षात्कृत्वेव प्राह–यथैत्यादि । हे भगवान् ! यथैव त्वमात्थ ब्रूषे वस्तुनो नित्यानित्यत्वं तथैव न दोष, अन्येषां नानादोषकल्मषमषीकलुषितत्वात् ।

एतदवष्टम्भाय दृष्टान्तमाह—

गुडो हि कफहेतु स्यान्नागरं पित्तकारणम् ।
द्वयात्मनि न दोषोऽस्ति, गुडनागरभेषजे ॥ ६ ॥

अनु०–गोळ ए कफनो हेतु छे अने सूठ ए पित्तनु कारण छे ज्यारे गोळ अने सूठ बन्ने एकत्र मळे छे त्यारे दोष रहेतो नथी, किन्तु भेषज–औषधरूप बनी जाय छे (६)

*निगदसिद्धोऽयम् । एतदवष्टम्भाय दृष्टान्तमाह—*

अव०–गुडो॰ यथैकाकी गुडः कफस्य श्लेष्मणो हेतु स्यात् नागरं शुण्ठी पित्तस्य कारणम्, द्वयात्मनि द्वयोर एकत्र करणेन कृते गुडनागरभेषज गुडिकाविशेष उन्मीलनी नाम्नि न दोषः, पित्तादिः, किन्तु प्रत्युत पुष्ट्यादिगुणः स्यात् तस्मात् ॥ ६ ॥

---

१ उन्मीलनी बुद्धिबलेन्द्रियाणां निर्मूलनी पित्तकफानिलानाम् नाग प्रधाना प्र नागर ।

वि०—ननु नित्यानित्यभेदाभेदसत्त्वासत्त्वसामान्यविशेषात्मकाभिलाप्यानभिलाप्यात्मके तत्त्वे मन्यमाने दुर्धरविरोधगन्धविधुरता धुरन्धरतां धारयति। तथाहि—यदि भेदस्तर्ह्यभेदः कथम् ?, अभेदश्चेत्तर्हि भेदः कथ स्यादिति विरोधः 1। तथा यदि भेदस्याधिकरण तर्ह्यभेदस्य न भवेत्, अथाभेदस्य तर्हि भेदस्य न स्याच्छीतोष्णस्पर्शवत्, नहि तदेव धूपदहनादिक शीत तदेवोष्णमुपलभ्यते, तथाप्रतीतेरभावादिति वैयधिकरण्यम् 2। तथा येन रूपेण भेदस्तेनाभेदोऽपि, येनाभेदस्तेन भेदोऽपि स्यात्, इति व्यतिकर· "परस्परविषयगमन व्यतिकर." इतिवचनात् 3। तथा येन रूपेण भेदस्तेनाभेदो येन चाभेदस्तेन भेदोऽपि स्यात्, (येन रूपेण भेदस्तेन भेदोऽभेदोऽपि, येन चाभेदस्तेनाभेदो भेदोऽपि) इति सङ्कर·। "सर्वेषा युगपत्प्राप्ति· सङ्कर·" इतिवचनात् 4। तथा येन रूपेण भेदस्तेनाभेदोऽपि येन चाभेदस्तेन भेदोऽभ्युपगन्तव्य· (येन रूपेण भेदस्तेन भेदाभेद, येन चाभेदस्तेनापि भेदाभेदोऽभ्युपगन्तव्यः) अन्यथा सर्वमनेकान्तात्मकमित्यस्य विरोधानुषङ्गात्। तथा च भेदाभेदावपि प्रत्येक भेदाभेदात्मकौ स्याताम्। तत्रापि प्रत्येक भेदाभेदात्मकत्वपरिकल्पनामनवस्था स्यात् 5। तथा केन रूपेण भेदः केन चाभेद इति सशय (भेदाभेदात्मकत्वे वस्तुनोऽभेदात्मकमिद भेदात्मक वेति निर्णयाभावात् सशयः) 6। तथा भेदरूपमभेदरूप वा दृष्ट वस्तु नाभ्युपगम्यते, अदृष्ट च भेदाभेदात्मक परिकल्प्यते, इति दृष्टहानिरदृष्टकल्पना च स्यात् 7। तथा च परिकल्पितस्य वस्तुनोऽभाव एव युक्तः 8। किञ्च—किं नाना-

वस्तुधर्मापेक्षया सधर्मनेकान्तात्मकम्, उत तन्निरपेक्षतया प्रत्येक सर्व वस्त्विति ? । प्रथमपक्षे सिद्धसाध्यता, द्वितीयपक्षेऽपि विरोधा विरोध 9 । किञ्च–किं क्रमेण सधर्ममेकान्तात्मकमभ्युपगम्यते यौगपद्येन वा ? । प्रथमपक्षे सिद्धसाध्यता, द्वितीयपक्षे तु स एव दोष इति 10 । किञ्चानेकधर्मान् वस्तु किमेकेन स्वभावेन नाना स्वभावैर्वा व्याप्नुयादिति । यद्येकेन, तदा तेषामेकत्वं वस्तुनो वा नानात्वं स्यात्, एकस्यैकत्व (?) मवेतादिति । अथ नानास्वभावै र्तर्हि तानपि नानास्वभावान् किमेकेन स्वभावेन व्याप्नुयात् नाना स्वभावैर्वा ? । यद्येकेन, तदा सर्वधर्माणामेकत्वं वस्तुनो वा नानात्वं स्यात्, अथ नानास्वभावैस्तर्हि तानपि किमेकेन स्वभावेन नानास्वभावैर्वा व्याप्नुयादित्यादि सर्व–मनवस्था च 11 । किञ्च–यदि सर्वं वस्त्वनेकान्तात्मकमभ्युपगम्यते, तर्हि जला- देरप्यनलादिरूपता अनलादेर्वा जलादिरूपता भवेत्, तथा च जलार्थिनो जलादावनलार्थिनश्चानलादौ प्रवृत्तिन स्यात्, अन्यो न्यविरुद्धस्यापि धर्मस्य सद्भावात् । को हि नाम विवक्षितार्थे विव क्षितार्थक्रियाकारिरूपमिवाविवक्षितार्थक्रियाकारिरूपमुपलभमानोवि- वक्षितार्थक्रियार्थी तत्र प्रवर्तेत प्रेक्षापूर्वकारी । न चैव ! विवक्षितार्थे विवक्षितार्थक्रियाकारिण्येव विवक्षितार्थक्रियार्थिन प्रवृत्तिदर्शनात्12। किञ्च । प्रमाणमप्यप्रमाणमप्रमाणं प्रमाणं वा भवेत्, तथा च सर्व जनप्रसिद्धप्रमाणाप्रमाणव्यवहारविलोपो भवेत् 13 । किञ्च–सर्व ज्ञोऽप्यसर्वज्ञ स्यात् 14 । किञ्च–सिद्धस्याप्यसिद्धत्व स्यात्, 15 ।

१ स्वभावेन ।

किञ्च । येन प्रमाणेन सर्वस्यानेकान्तरूपता प्रसाध्यते तस्य कुतो नैकान्तरूपतासिद्धिः ?, यदि स्वतः, तर्हि सर्वस्यापि तथा भविष्यति, किं प्रमाणपरिकल्पनाया । अथ परतस्तर्ह्यनवस्था 16 । किञ्चानेकान्तबाधक प्रमाणमस्ति, तथाहि-भेदाभेदिकौ धर्मौ नैकाधिकरणौ परस्परविरुद्धधर्मत्वात्, शीतोष्णस्पर्शवदति 17 । तस्मादेकान्तरूपमेव वस्त्विति स्थितम्, विरोधादीनाशङ्क्य तान्निराकुर्वन्नाह—

**द्वयं विरुद्धं नैकत्राऽसत्प्रमाणप्रसिद्धितः ।**
**विरुद्धवर्णयोगो हि, दृष्टो मेचकवस्तुषु ॥ ७ ॥**

**अनु०-एज प्रमाणे एक वस्तुने विषे नित्यत्व अने अनित्यत्वादि बे विरुद्ध-धर्मोनुं रहेवुं ए पण विरुद्ध नथी, प्रत्यक्षादि कोइ पण प्रमाणथी तेमां विरोध सिद्ध थई शकतो नथी; कारण के मेचक=कावर-चीतरी वस्तुओने विषे विरुद्ध-वर्णोनो संयोग प्रत्यक्ष देखाय छे. (७)**

दृष्टान्तोपनयनमाहुः—

अव०-द्वयं० द्वयं नित्यानित्यलक्षणमेकत्र घटादौ न विरुद्धमयुक्तम्, कुतः ?, असत्प्रमाणप्रसिद्धितः सतां विद्यमानाना प्रमाणानां युक्तीनामभवात्; ताः काश्चन युक्तयो न

सन्ति—याभिर्नित्यानित्ये विरोधादयः साध्यन्ते। विरु० हि च त्वाद्विरुद्धानां कृष्णश्वेतादीनां वर्णानाम्, योगः—सङ्करः, मेचकेषु—शबलेषु, वस्तुषु पटादिषु, दृष्टः—प्रत्यक्षेणोपलब्धः ॥७॥

वि०—एकस्मिन् पृथ्वीपृथ्वीधरादौ वस्तुनि नित्यानित्यात्मकरूप द्वय न विरुद्धम्। न च विरोधोपलक्षितवैयधिकरण्यादिदोषकलुषम्। कथमिति चेदित्याह—प्रसल्पमानप्रसिद्धेः, किमपि न लभमान प्रामाणिकम्मन्यैः प्रमाणीक्रियते, येन विरोधादीनां सिद्धिः साध्यते। तथाहि—यथा यदुक्तम्—विरोधो नामक स्यादिति, तदयुक्तम्। पर्यायरूपतया भेदोऽभ्युपगम्यते, द्रव्यरूपतया चाभेदः, तयोश्चैकरूपरसयोरिव सत्त्वासत्त्वयोरिव चाऽविरोधसिद्धेः प्रतीयमानयोश्च कथं विरोधो नाम, स ह्यनुपलम्भसाध्यः यथा वन्ध्यागर्भे स्तनन्धयस्य। ननु सत्त्वासत्त्वयोरिवेति दृष्टान्तोऽप्यसिद्ध इति चेत्, तन्न स्वद्रव्यक्षेत्रकालभावापेक्षया सत्त्वरूपस्य, परद्रव्यक्षेत्रकालभावापेक्षया चासत्त्व(रूप)स्यैकस्मिन् क्षणे सर्वस्य पदार्थस्य प्रत्यक्षादिमुखेन प्रतिभासनात्। न खलु पदार्थस्य सर्वथा सत्त्वमेव स्वरूपम्, स्वरूपेणेव पररूपेणापि सत्त्वप्रसङ्गात्। नाऽप्यसत्त्वमेव, पररूपेणेव स्वरूपेणाऽप्यसत्त्वप्रसङ्गात्। न च स्वरूपेण सत्त्वमेव पररूपेणासत्त्वम्, पररूपेण चाऽसत्त्वमेव स्वरूपेण सत्त्वम्, तदपेक्ष्यमाणनिमित्तभेदात्। स्वद्रव्यादिकं हि निमित्तमपेक्ष्य सत्त्वप्रत्ययं जनयति पदार्थः। परद्रव्यादिकं त्वपेक्ष्यासत्त्वप्रत्ययम्। इत्येकत्वद्वित्वादि

१–'भाव' इत आरभ्य 'प्रसङ्गात्' इतिपर्यन्तः पाठः प्रथममुद्रितपुस्तके नास्ति।

सङ्ख्यावदेकस्मिन्पदार्थे सत्त्वासत्त्वयोर्भेद'। न चैकस्मिन् वस्तुनि वस्त्वन्तरमपेक्ष्य द्वित्वादिसङ्ख्या प्रकाशमाना स्वात्ममात्रापेक्षैकत्वसङ्ख्यातो नान्या प्रतीयते। नापि सा स्वरूपात् तत्त्वतो भिन्नैवास्यासङ्ख्येयत्वप्रसङ्गात्। सङ्ख्यासमवायाचत्त्वमित्यप्ययुक्तम्, कथञ्चित्ताढात्म्यव्यतिरेकेण समवायस्यासम्भवात्। तस्मात् सिद्धोऽपेक्षणीयमेदात् सङ्ख्यावत्सत्त्वासत्त्वयोर्भेद'। तथाभूतयोश्चानयोरेकस्मिन् पदार्थे प्रतीयमानत्वात् कथ विरोधः?, यतो दृष्टान्तो न स्यात्। भ्रान्तेयं प्रतीतिरित्यापि मिथ्या, बाधकस्याविद्यमानत्वात्, विरोधो बाधक इत्यप्यसत्यम्, इतरेतराश्रयानुषङ्गात्। सति हि विरोधे तेनास्या बाध्यमानत्वाद् भ्रान्तत्वम्, ततश्च तद्विरोधसिद्धिरिति। विरोधश्चाविकलकारणस्यैकस्य भवतो द्वितीयसन्निधानेऽसत्त्वान्निश्चीयते, यथोष्णसन्निधाने शीतस्य। न च पर्यायरूपेण मेदस्य सन्निधाने द्रव्यरूपेणामेदस्याभाव उपलभ्यते। किञ्चानयोर्विरोध किं सहानवस्थानस्वभाव, परस्परपरिहारस्थितिस्वभावो वध्यघातकस्वभावो वा?, तत्र न तावत्सहानवस्थानस्वभावो घटते?, मृद्द्रव्यलक्षणे पदार्थे मृद्द्रव्यरूपतयाऽमेदस्य घटादिपर्यायरूपतया(च) मेदस्याध्यक्षबुद्धौ प्रतीयमानत्वात्। न च तथाप्रतीयमानयोरप्येकत्र तयोर्विरोधो युक्त', रूपरसयोरपि तत्प्रसङ्गात्। परस्परपरिहारस्थितिस्वभावस्तु विरोधो घटादौ मेदामेदयो सत्त्वासत्त्वयोर्वा रूपरसयोरिव सतोरेव नासतोर्नापि सदसतो सम्भवति। वध्यघातकस्वभावोऽपि विरोधोऽहिनकुलयोरिव बलवदबलवतो, न च मेदामेदयो सत्त्वासत्त्वयोर्वा बल-

---

१—'सारूप्यात्तद्वतो' इति प्रत्यन्तरे।

बध्यघातकभावो दृश्यते। नहि यथा नकुलेन बलवता सर्पस्य विघातः क्रियमाणो दृश्यते तथा भेदेनाभेदस्याभेदेन च भेदस्य विघातो दृश्यते, तथाप्रतीतेरभावात्। भवतु वा कश्चिद्विरोध इति, तथाप्यसौ सर्वथा कथञ्चिद्वा स्यात्, गत्यन्तराभावात्। न तावत् प्रथमपक्षो घटते, शीतोष्णस्पर्शयोरपि प्रमेयत्वादिना विरोधासिद्धेः। एकाधारत्वेन चैकस्मिन्नपि हि धूपदहनादिभाजने कस्मिंश्चित् प्रदेशे शीतस्पर्शः कस्मिंश्चिच्चोष्णस्पर्शः प्रतीयत एव, अथानयोः प्रदेशयोर्भेद एवेष्यते, भवतु नामानयोर्भेदः, धूपदहनाद्यवयविनस्तु न भेदः, न चास्य शीतोष्णस्पर्शाधारता नास्तीति वक्तुं युक्तम्, अध्यक्षविरोधात्। तस्मान्न सर्वथा भावानां विरोधो घटते। कथञ्चिद्विरोधस्तु सर्वभावेषु तुल्यो न बाधकः। यथोक्तम्-वैयधिकरण्यं स्यादिति तदप्यसत्यम्। निर्बाधं प्रत्यक्षबुद्धौ[1] भेदाभेदयोरेकाधिकरणत्वेन प्रतिभासनात्। न खलु तथाप्रतीयमानयोर्वैयधिकरण्यम् रूपरसयोरपि तत्प्रसङ्गात्। उभयदोषोऽपि न घटते प्रतीयमाने कथमुभयदोषो नाम?, मामादोषोऽपि न स्यात्। यथैव हि घटादौ भेदोऽनुभूयते तथाऽभेदोऽपीति क्व नामासम्भवः? अत एव सङ्करव्यतिकरावपि न स्तः। भेदाभेदयोरेकस्मिन् पदार्थे स्वरूपेण प्रतीयमानत्वात्। यथोक्तमनवस्था स्यात्। तदप्यनुपपन्नम्, वस्तुन एव भेदाभेदात्मकत्वाभ्युपगमात्। न पुनर्भेदाभेदयोर्धर्मयोः पदार्थस्य तु भेदो धर्मः तथाभेदस्तु धर्मेति कथमनवस्था? न चैकान्ताभ्युपगमो दोषाय, सम्यग्नयविषयस्य भेदाभेदस्य च स्याद्वादिभिरभ्युपगतत्वात्।

१ निर्बाधप्रत्यक्षे बुद्धौ इति प्रत्यन्तरे।

संशयोऽपि न युक्तः, भेदाभेदयोः स्वरूपेण प्रतीयमानत्वात्, एकस्मिन् भेदाभेदाप्रतीतौ हि संशयो युक्त., क्वचित् प्रदेशे स्थाणुपुरुषत्वाप्रतीतौ तत्सशयवत्। चलिता च प्रतीति' संशयः, न चेयं चलिता। तथा दृष्टहानिरदृष्टकल्पना च न स्यात्। भेदाभेदात्मकस्य वस्तुन. प्रत्यक्षादिप्रमाणबुद्धौ प्रतीयमानत्वात्, तत एवाभावोऽपि न युक्त। यच्चोक्तम्—नानावस्तुधर्मापेक्षयेत्यादि, तदसत्यम्, न खलु नानावस्तुधर्मापेक्षयैकस्यानेकान्तात्मकत्वमङ्गीक्रियते; येन सिद्धसाधन स्यात्। अपि त्वेकस्यैव वस्तुन स्वधर्मापेक्षया। न च तत्र विरोधादिदोषानुषङ्गस्तस्य प्रागेव निराकृतत्वात्। यच्चोक्तम्—क्रमेणेत्यादि न तद्युक्तम्। क्रमेणाक्रमेण चानेकान्तस्याभ्युपगतत्वात्। क्रमभाविधर्मापेक्षया हि क्रमेणाक्रमभाविधर्मापेक्षया चाक्रमेणेति। यच्चोक्तम्—अनेकधर्मान् वस्तु किमेकेन स्वभावेन व्याप्नुयान्नानास्वभावैर्वेत्यादि। तत्र नैकेन स्वभावेन नानास्वभावैर्वा भिन्नवस्तु भिन्नान् स्वभावान् स्वतो व्याप्नुयादिति जैनो मन्यते, किं तर्हि स्वस्वकारणकलापादनेकस्वभावात्मक मतमिति। यच्चोक्तम्—"जलादेरप्यनलादिरूपता स्यादित्यादि," तदप्यनुपपन्नम्। जलादेर्हि स्वरूपापेक्षया जलादिरूपता, न पररूपापेक्षया, ततो न जलादौ जलार्थिनोऽनलादिरूपस्य दर्शनम्, यतस्तत्र प्रवृत्तिर्न स्यात् प्रेक्षापूर्वकारिण इति। यच्चोक्तम्—" प्रमाणमप्यप्रमाण स्यादित्यादि," तदपीष्टमेव। प्रमाणस्य स्वरूपापेक्षया प्रमाणरूपतायाः, पररूपापेक्षया चाप्रमाणरूपतायाः, स्याद्वादिनामिष्टत्वात्। ततो न लोकप्रसिद्धप्रमाणाप्रमाणव्यवहारविलोप स्यात्, उक्तन्यायेन प्रमाणाप्र-

मानम्यवहारस्य लोके प्रमाणेऽपि सुप्रसिद्धत्वादिति । यच्चोक्तम्-"सिद्धोऽप्यसिद्धः स्यादित्यादि", तदपीष्टमेव । पररूपापेक्षया सिद्धस्याप्यसिद्धरूपतायाः अभ्युपगतत्वादिति, यच्चोक्तम्-"सर्वज्ञोऽप्यसर्वज्ञः स्यादिति", तदपीष्टमेव । असर्वज्ञरूपेण सर्वज्ञस्याप्यसर्वज्ञताया अभ्युपगतत्वात् इति प्रकारान्तरेण च तस्यासर्वज्ञता न संभवत्येव प्रमाणबाधनादिति यच्चोक्तम्-" येन प्रमाणेन सर्वस्यानेकान्तरूपता प्रसाध्यते तस्य कुतोऽनेकान्तरूपतासिद्धिः स्यादित्यादि" । तत्रोच्यते-प्रमेयं हि द्विविधमचेतनं चेतनं च, तत्राचेतनं स्वपराध्यवसायविकलं न स्वस्यैकान्तरूपतामनेकान्तरूपतां च परिच्छेत्तुम् अलम् । चेतनेन तत्रानेकान्तरूपता परिच्छिद्यते । चेतनं तु स्वस्याप्यनेकान्तरूपतां परिच्छेदयितुं समर्थम् न च तत्रापरं प्रमाणमपेक्ष्यते येनानवस्था स्यात् । तथाहि-भिन्नरूपं वस्तु येन प्रत्यक्षेणानुमानेन वा परिच्छिद्यते तत् स्वरूपापेक्षयासमा भाव पररूपापेक्षया चाभावम् परिच्छिनत्ति अन्यथा यथावदसङ्कीर्णसत्त्वरूपस्य ग्राहकं न स्यात् न चैवम् स्यात्तदाऽप्यावृतत्वस्वरूपस्य प्रमाणस्य सिद्धरूपत्वादिति । यस्य तु कस्यचित् तत्रापि स्वतुरागमादिहितवासनाव शादेकान्तसमारोप., सोऽपि तस्य न्यायान्तरान्निराकर्तव्य । तथाहि धूमादिलिङ्गस्य यथा स्वसाध्यं प्रति गमकत्वम्, तथा साध्यान्तरं प्रत्यपि उतान्यथेति । यदि गमकत्वमयाङ्गीक्रियते तदा साध्यान्तरस्यापि तत एव सिद्धेर्लिङ्गान्तरकल्पनावैफल्यं स्यात् तत्र सर्वस्यापि साध्यस्य सिद्धेरिति । उतान्यथा तर्हि यथैकं लिङ्गं गमकत्वागमकत्वरूपेणानेकान्तरूपम्, तथा सर्वं वस्तु स्वपरकार्यकरणसामर्थ्या-

सामर्थ्येनानेकान्तरूपमस्तु, विशेषाभावादिति। यदप्युक्तम्–बाधकं प्रमाणमस्ति–भेदाभेदौ नैकाधिकरणावित्यादीति, तदप्यनुपपन्नम्, पक्षस्य प्रत्यक्षेण बाध्यमानत्वाद्धेतोश्च कालात्ययापदिष्टत्वात्, अनुष्णोऽग्निर्द्रव्यत्वाज्जलवदित्यादिवदिति। भेदाभेदयोरेकाधिकरणत्वेन प्रत्यक्षबुद्धौ प्रतिभासनात् न चानयोर्विरुद्धधर्मयोरपि सतो क्वापि क्षतिरीक्ष्यत इति पर्यालोच्य स्तुतिकृदपि विरोधाभावमाह–विरुद्धेत्यादि। हि यस्माद्विरुद्धवर्णसम्बन्धो मेचकवस्तुषु मिश्रवर्णपदार्थेषु दृष्ट, पर न तत्रैतद् दूषणकणघोषणान्वेषणापि कर्तुं पार्यते। यदि तत्रापि वाग्डिण्डिमाडम्बरप्रचण्डपाण्डित्यपाटवनाट्यशीलैः प्रत्यक्षादिप्रमाणोपपन्ने क्वापि युक्ति प्रपञ्च्यते, तदा एवमप्यस्तु। अनुष्णोऽग्निर्द्रव्यत्वात् जलवत्। अथैतत्प्रत्यक्षबाधितपक्षानन्तर निर्दिश्यमानत्वेन कालात्ययापदिष्टम्। आ परमबन्धो! पिब पीयूषयूषम्, वयमपि हस्तमुत्क्षिप्य एवमेव वदाम–मेचकवस्तुवत्प्रत्यक्षोपपन्नेऽप्यनेकान्ते का कुयुक्तिनिरुक्तिप्रपञ्चचातुरी[2], तस्माद्विरोधादिदूषणवारणगणाघर्षणीय परा प्रौढिरूढि प्रपन्नोऽनेकान्तकेशरी।

ननु भो! सभ्या[1] निभालयन्तु कौतुकम्। एते बौद्धादय स्वयमभ्युपगम्यापि स्याद्वादवाद निराकुर्वन्त किं न कुर्वन्ति स्वाधिरूढशाखामोटनन्यायम्[2], एतदेव पराभ्युपगतानेकान्तवादसंवादद्वारेण दृष्टान्तयुक्त्या स्पष्टयन्नाह—

**विज्ञानस्यैकमाकारं, नानाकारकरम्बितम्।**
**इच्छंस्तथागतः प्राज्ञो, नानेकान्तं प्रतिक्षिपेत्॥८॥**

अनु०-नाना-विचित्र-आकार सहित विज्ञान एक आकारवाळुं छे, एम स्वीकारतो प्राज्ञ बौद्ध अनेकान्तवादनुं उत्थापन करी शकतो नथी (८)

प्रभोः पुरः परतीर्थिकानां यथास्थितं विज्ञप्य "कुद्रः प्रसृद्विषो सेवकानामपि न हित" इति पुनः प्रसादनाय प्रकारान्तरेण विज्ञपयति—

अथ० विज्ञा०-विज्ञानस्यैकमाकारं स्वरूपम्, नाना-विचित्रा च आकारा घटादीनां तैः करम्बितं मिश्रमिच्छन्नभिलषन्, तथागतो बौद्धोऽनेकान्तं-स्याद्वादम् न प्रतिक्षिपेन्नोत्थापयेत्। कथम्भूतः? प्राज्ञो ज्ञाता, प्रकर्षेणाज्ञो मूर्खोऽपि यतः स्याद्वादं स्वीकुर्वंस्त्वां नोपास्ते ॥ ८ ॥

वि०-विज्ञानस्य संवित् एकमेव स्वरूपं नानाचित्रपटाद्यनेकाकारमिश्रं समभिलषन् बौद्धो नानेकान्तं निराकुर्यात्, अत एव प्राज्ञः "ज्ञानाद्वैतवादिनां हि मते एकमेव चित्रज्ञानं ग्राहकं तस्य भासा ग्राह्या इत्येकस्यैव ग्राह्यत्वं ग्राहकत्वं चाभ्युपगच्छन् कथमनेकान्तवादं निराकुर्यात्"। यदि प्रकर्षेणाज्ञो न स्यात्। अत एकत्र चित्रपटीज्ञाने नीलानीलयोः परस्परविरुद्धयोरप्यविरोधेनोररीकारात्। तस्मात्तथागतैरभ्युपगत एव स्याद्वादः।

नैयायिकवैशेषिकयोरपि सम्मतिं प्रतिपत्तिमाह—

चित्रमेकमनेकं च, रूपं प्रामाणिकं वदन्।
योगो वैशेषिको वाऽपि, नानेकान्तं प्रतिक्षिपेत् ॥९॥

**अनु०-एक चित्ररूप अनेक रूपवाळुं प्रमाण-सिद्ध छे एम कहेनारो योग ( नैयायिक ) के वैशेषिक पण अनेकान्तवादनुं उत्थापन करी शकतो नथी. (९)**

अव०-चित्रं०-एकं चित्रं रूपमनेकमनेकाकारमयम् । प्रामाणिकं प्रमाणसिद्धम, वदन्-कथयन्, योगो नैयायिको, वैशेषिकोऽप्यनेकान्त न प्रतिक्षिपेत् ॥ ९ ॥

वि०-एक चित्र रूप तत्रैव चानेकाकाररूप प्रमाणोपपन्न वदन्तावक्षपादकणादौ न स्याद्वाद निराकुरुत । तेषा हि मते मेचकज्ञानमेकमनेकाकारमुररीक्रियते, यतस्तेषामेव सिद्धान्तसिद्धिः, ' एकस्यैव चित्रपटादेश्चलाचलरक्तारक्तावृतानावृताद्यनेकविरुद्धधर्मोपलम्भेऽपि दुर्लभो विरोधगन्ध ', तस्मादस्मद् वद् यौगिकवैशेषिकावप्यनेकान्तमतानुमतिं वितन्वन्तौ ।

तथा कापिलोऽपि न स्याद्वादवादापलापचापलपापमवाप्नुयादित्येतदेव स्तुतिकृत्प्रथयन्नाह—

**इच्छन् प्रधानं सत्त्वाद्यैर्विरुद्धैर्गुम्फितं गुणैः ।**
**साङ्ख्यः सङ्ख्यावतां मुख्यो नानेकान्तं प्रतिक्षिपेत् १०**

**अनु०-सत्व रजस् आदि विरुद्ध गुणो वडे गुम्फित एक प्रधानप्रकृतिने इच्छतो एवो विद्वानोमां मुख्य सांख्य पण अनेकान्तवादने उत्थापी शकतो नथी. (१०)**

**अव०–इच्छन्०–तथा हे वीतराग ! प्रधानं प्रकृतिम्, सत्त्वाद्यैः-सत्त्वरजस्तमोलक्षणैर्विरुद्धैर्गुणैर्गुम्फितं मिश्रितमिच्छन् सङ्ख्यावतां-विदुषां मुख्यः साङ्ख्योऽनेकान्तं न प्रतिक्षिपेद् ॥१०॥**

वि०–हे वीतराग ! सङ्ख्यावतां मुख्यो मुख्यामिधेयनामधेय साङ्ख्य प्रधानं प्रकृतिं महदाद्युत्पादमूलहेतु सत्त्वरजस्तमोभिर्गुणै-रन्योन्यविरोधवद्भिरपि ग्रथितमविरुद्धतयाभिदधानः स्वात्मनो नानेकान्तमतवैमुख्यमास्थाति, तन्मते हि प्रकृतिरेका महदाद्यात्मिका अनेकाकारा अभ्युपपद्यते (अभ्युपगम्यते)। ततस्साङ्ख्योऽप्यनेकान्तमतसम्मुख एव ।

ननु भो ! क एष आर्हतमतपाण्डित्यविशेषमाविष्कुर्वन् दुर्गसंयोगनायकीकृतचिदंशमागादिदृष्टान्तावष्टम्भेन स्याद्वादवादं साह सत्ताचष्टे ?, प्रथमं तावज्जीव एव नास्ति क तदाश्रितभेदोऽभेदो ऽनेकान्तमतस्वर्गापवर्गसर्गसङ्कथा; तथाहि–सकलेऽप्यस्मिन्निखिले जीवलोके न खलु भूतचतुष्टयव्यतिरिक्तं किमपि वस्त्वन्तरमस्ति, प्रत्यक्षप्रमाणगोचरातिक्रान्तत्वात्, यद्वदेवं तन्नास्ति, यथा सुराङ्ग मोचमाङ्गशृङ्गम्। न च वाच्यम्–प्रतिप्राणिप्रसिद्धस्य चैतन्योपलम्भस्यान्यथानुपपत्त्या तद्धेतु कश्चिदात्मा परिकल्पनीयः । भूतचतुष्टधर्मत्वेन तदुद्भूतत्वेनाविगानात्। अत्रैतमाचक्षीथाः।–कथं अज्ञानरूपाणि भूतानि तद्विलक्षणं बोधरूपं चैतन्यं जनयेयुरिति । तदपि न, न खल्वेकान्तेन कारणमात्ररूपमेव कार्यमुत्पद्यते, असमनुरूपस्यापि दर्शनात् यथा मद्याङ्गेभ्यो मदशक्ति । एवं च भूतपरिणतामि

महद्भूतान्येव स्वस्वरूपजडस्वभावव्यतिरिक्तं चैतन्यमुद्बोधयन्ति, तच्च कायाकारविवर्तेष्ववतिष्ठते, तदभावे पुनर्भूतेष्वेव लीयते, इति न कश्चिद्भूतोद्भूतचैतन्यव्यतिरिक्तश्चैतन्यहेतुतया परिकल्प्यमानः परलोकयायी जीवोऽस्ति, दृष्टहान्यदृष्टपरिकल्पनाप्रसङ्गात् । एवं च सति परलोकोऽपि प्रत्युक्त एवावगन्तव्य । परलोकयायिनोऽभावे परलोकस्यानुपपन्नत्वात्, सति हि धर्मिणि धर्माश्चिन्त्यमाना समीचीनतामुपचिन्वन्ति । किञ्च–परलोकयायिजीवसुखदुःखनिबन्धनौ धर्माधर्मावप्याकाशकुशेशयविकाशनीकाशौ । तथा तत्फलभोगभूमिप्रतिमस्वर्गनरकादिकल्पनमप्यलीकसङ्कल्पविलसितम् । विना हि धर्माधर्मौ कुतस्तत्फलभोगभूमिसम्भव । यच्चैवमप्यैकान्तिकपुण्यपापक्षयोत्थमोक्षपक्षपातिता सा विगलितदृशश्चित्रशालोपवर्णनमिव कस्य नाम न हास्यावहेति यत्किञ्चिदेतत् । अत्र प्रतीविधीयते–योऽयमतिप्रमाणप्रवीणेन भवता आत्मनिरासाय प्रत्यक्षप्रमाणगोचरातिक्रान्तत्वादिति हेतुरुपन्यस्त, स एव तावदसिद्ध, जीवस्य स्वसंवेदनप्रत्यक्षविषयत्वात्, तथाहि–सुख्यहं दुःख्यहमित्यादिस्वसम्बद्धस्वसंवेदनप्रत्यक्षेणावगम्यते जीव.। सर्वकाल निर्बाधत्वेन च नाय प्रत्ययो भ्रान्त । "चैतन्यान्वितदेहलक्षणपुरुषगोचरत्वेऽपि गौरोऽहं स्थूलोऽहमित्यादिप्रत्यय सङ्गच्छते, अत कृत कायातिरिक्तात्मकल्पनाक्लेशेनेति चेत्?" न, भूताना स्वसंवेदनगोचरत्वे बहिर्मुखैव स्वसंवित्तिर्भवेत्, यथा पटोऽयमिति बहिर्मुख प्रत्यय, तथा सुख्यहमित्यादिरपि, यदि शरीरगोचरो भवेत्, ततोऽयं सुखीत्येव बहिर्मुख स्यात्, अन्तर्मुखंश्चायमनुभूयते ।

नहि कोऽप्यहं सुखीत्यादिप्रत्ययं देहे विधत्ते, किन्तु देहातिरिक्ते कस्मिंश्चित्, इत्यतः प्रतीयते—सुख्यहमित्याद्यन्तर्मुखप्रत्ययो जीव गोचर एव, न भूतगोचर ; बहिर्मुखत्वेनानवभासात् । यच्चोक्तम्—वपूरूपपरिणतानि महाभूतान्येव चैतन्यमुद्बोधयन्तीत्यादि । तदप्य विकलविकल्पताविलसितम् । यतः—यदि " हि महाभूतेभ्य एव चैतन्यमुन्मीलतीत्यापसञ्जितसञ्जतमपि स्वेच्छाचरन्यायेनान्यथानुपपत्ति प्रतिहतेन भवता कल्पनीयम्", तदा—"चैतन्यमेव च भवान्तरादुत्प विस्थानमागत्य चतुर्भूतप्रमाथायिदेहमुत्पादयेत्, भूयो भवान्तर गामुकं सत्तत्यजेत्, तेन चाधिष्ठितं स्वेच्छाविहारादिक्रियां कुर्यात्, तद्विनिर्मुक्तं भूयो दारुवदासीत, इत्यात्ममन्यमेव वपु न पुनरात्मा भूतसमुदयसंयोगजन्यदेहजन्य " इत्यकाल्पनिकमेवावरीक्षुदारतरं विभावयामः । यचेतनस्यात्मन कर्मविघटनसताऽन्याऽन्यभवभ- मान्यान्यदेहसम्पादनमोर्घटनाघटितत्वात् । यचेत्थमभिदधीथा — जन्मान्तराद्युत्पत्तिप्रदेशमागच्छन्नात्मा न प्रत्यक्षेण लक्ष्यते । नन्वेव 'वपूरूपधारणद्वारेण भूतान्यपि चैतन्यमुन्मीलयन्ति न साक्षाल्लक्ष्यन्ते' इति भवत्पक्षेऽपि पक्षपात विना सामान्यम् । भूतेषु वपूरूपपरिण- तेष्वेव चैतन्यमुपलभामहे नान्यदेत्यन्यथानुपपत्त्या भूतजन्यमेव चैतन्य कल्पयाम इति चेत् ! तर्हि—कथ मृतावस्थायां भूतेषु तदवस्थेष्वेव चैतन्य मोपलभ्यते । वपूरूपविवर्तस्य कादाचित्कत्वा न्यथानुपपत्त्याऽस्य कारणान्तरापेक्षीत्यतस्तत्सम्पादनसमर्थं जन्मा न्तरापातात्मलक्षण चैतन्यमेव मन्महे । अ—यच—आत्मा तावत्पूर्व- शुभाशुभचैतन्ययोगाद्देहसम्पादनायोत्तिष्ठते, इति सौहृदमहमेव ।

महद्भूतानि पुनः किं रूपाणि चैतन्य कर्तुमारभेरन् । चैतन्यवन्ति तद्विनाकृतानि वा ?, यदि प्रथम पक्षस्तदा विकल्पद्वयमुदयते, तेभ्यस्तच्चैतन्य व्यतिरिक्तमव्यतिरिक्त वा, व्यतिरिक्त चेत् ?, ततो न शरीरेष्विव महद्भूतेष्वप्यवस्थितम् भूतविसदृशमेव स्वहेतुमवस्थापयति, इति स्ववचसैवात्मानमनुमन्यमान. किमिति कुविकल्पकल्पनेन स्व क्लेशयसि । अथाव्यतिरिक्तम्, एव सति सर्वमहद्भूतान्येकता धारयन्ति, एकचैतन्याभिन्नत्वान्निजस्वरूपवत् । अथ पृथक्स्वस्वचैतन्याभिन्नाना तेषा नाय प्रेरणावकाश इति मन्येथा', तदपि न । यतस्तज्जन्यनरशरीरेऽपि भूतोत्पाद्यश्चैतन्यचतुष्टयप्रसङ्ग । अथ चत्वार्यप्येकीभूय बहवस्तन्तव इव पट महत्तरचैतन्यमुत्पादयेयुरिति ब्रूषे, तदा तच्चैतन्यं किं भूतसयोग उत तज्जन्यमन्यदेव किञ्चिदिति वाच्यम् । भूतसयोगश्चेत् ?, तदयुक्तम्, चैतन्यानामन्योन्यसयोगासिद्धे., अन्यथा प्रचुरतरचैतन्यान्येकीभूय महत्तम चैतन्य जनयेयुः । न चैतद् दृष्टमिष्टं वा । अथ भूतोत्पाद्यमन्यदेव किञ्चिदित्येतस्मिन्नपि किं तेषामन्वयोऽस्ति न वा ?, अस्ति चेत् ?, तदा पूर्ववत् भूतजन्यचैतन्यचतुष्टयतापत्तिः, अथ नास्ति, तदप्यसङ्गतम्, निरन्वयोत्पत्तेर्युक्तिरिक्तत्वात् । तस्मान्न सचैतन्यानि चैतन्यमुत्पादयेयुर्भूतानि । न च तद्विनाकृतानि, तेषामत्यन्तविसदृशत्वेन चैतन्योत्पत्तिविरुद्धत्वात्, अन्यथा सिकताभ्योऽपि तैलमुत्पद्येत । अन्यच्च--भूतनिचयमात्रजन्य चैतन्यं तत्परिणतिविशेषजन्यं वा स्याद् ?, न तावत्प्रथमः पक्ष. क्षोदक्षम, अवनिजीवनपवनदहनयोजनेऽपि चैतन्यानुपलम्भात् । द्वैतीयिकपक्षे पुनः, क परिणामविशेष इति पृच्छामः ।

वपूरूपपरिणतिं चेत्, तत् सा सर्वकालं कस्मान्न स्यात्, किमपि कारणान्तरमाश्रित्योत्पद्यत इति चेत्, तदा तत्कारणमान्तरं जन्मान्तरागतमात्मचैतन्यमिति वितर्कयाम, तस्यैव वपूरूपपरिणतिमच्चैतन्यानुरूपोपादानकारणत्वात्, तदभावे वपूरूपपरिणतौ सत्यामपि मृतदशायां मृतस्यायेन चलनादिक्रियाऽनुपलम्भात्। तन्न वपूरूपपरिणतिमच्चैतन्यम् किन्तु सैव तज्जन्येति क्षोदक्षमं लक्षणाम:। अथ न प्रत्यक्षादन्यत् प्रमाणम्। न च तेनागमनगमनादिक यथान्तराच्चैतन्यस्योपलम्भामहे, तेन तत्स्वरूपाण्येव भूतानि संवेद्यतया निर्दिशाम इति तदप्यसत्। यत केवलप्रत्यक्षाश्रयेण देशकालस्वभावविप्रकृष्टानां मेरुप्रपितामहपरमाण्वादीनामप्यभावप्रसङ्ग:, तेन च भवतादीनामप्यनुपपत्ति: इत्यतो बलात्कारेणैवानुमानादीनि प्रमाणानि प्रतिपत्तव्यानि। सन्ति चानुमानान्यनेकश:, तथाहि—अस्ति कश्चिद्देहव्यतिरिक्तश्चेतन: सुखदु:खादिमित्याद्यनुभवस्यान्यथानुपपत्ते:। यदि च स न स्यात् तदा सुखाद्यनुभवोऽपि न भवेत् यथा मृतशरीरे। तथा हिताहितप्राप्तिपरिहारचेष्टा प्रयत्नपूर्विका विशिष्टक्रियात्वात् रथक्रियावत्। यश्चास्य प्रयत्नस्य कर्ता सोऽयमस्मत्सम्मतश्चेतन:। न च निरुक्तियुक्तिप्रतिहतेन मनसा इह मन एव देहातिरिक्त कश्चिदस्ति न त्वमुष्मिन्निति विप्रतिपत्तव्यम्, जन्मान्तरागामुकत्वेनैवास्य प्रमाणप्रतिष्ठितत्वात्। तथाहि—तदहर्जातबालकस्याद्यस्तन्याभिलाष: पूर्वाभिलाषपूर्वक:, अभिलाषत्वात् द्वितीयदिवसादिस्तन्याभिलाषवत्। तदिदमनुमानमाद्यस्तन्याभिलाषस्याभिलाषान्तरपूर्वकत्वमनुमापयदर्थापत्त्या परलोकागामिजीवमाक्षिपति, तज्जन्मस्य

मिलाषान्तराभावात् । किञ्च–यदुक्तम्–एतावता धर्माधर्मावपि नभोम्भोजनिभौ मन्तव्याविति, तदप्यपाकृतम् । तदभावे सुखदु खयोर्निर्हेतुकत्वात् अनुत्पाद एव स्यात् । अनुत्पाद एव स्यात् । स च प्रत्यक्षविरुद्धः । तथाहि–मनुजत्वे समानेऽपि दृश्यन्ते केचन स्वामित्वमनुभवन्तोऽपरे पुनस्तत्प्रेष्यभावभाविभ्राणा', एके च लक्षमम्भरयोऽन्ये तु स्वोदरदरीपूरणेऽप्यनिपुणाः, एके देवा इव निरन्तरसरसविलाससुखशालिन , इतरे नारका इवोन्निद्रदु.खविद्राणचित्तवृत्तयः, इत्यतोऽनुभूयमानसुखदु.खनिबन्धनौ धर्माधर्मौ स्वीकर्त्तव्यौ। तदङ्गीकरणे च विशिष्टयोस्तत्फलयोर्भोगभूमी स्वर्गनरकावपि प्रतिपत्तव्यौ, अन्यथाऽर्द्धजरतीयन्यायप्रसङ्गः स्यात् । एव च पुण्यपापकर्मक्षयोत्थमोक्षपक्षोक्तदूषणमप्यननुगुण गणनीयम् । न च वाच्यम्, "यदुत ' बन्धः कर्मजीवसंयोगलक्षणः' स आदिमान् आदिरहितो वा ?, तत्र यदि प्रथमो विकल्पः, ततो विकल्पत्रयप्रसङ्ग', किं पूर्वमात्मनः प्रसूतिः पश्चात् कर्मण', यदि वा पूर्वं कर्मण' पश्चादात्मन', आहोस्वित् युगपदुभयस्येति, किञ्चातः ?, सर्वत्रापि दोषः । तथाहि–न तावदात्मन' पूर्वं प्रसूतिः, निर्हेतुकत्वात् व्योमकुसुमवत्, नापि कर्मणः प्राक् प्रसूति , कर्तुरभावात्, न चाकृत कर्म भवति, युगपत्प्रसूतिरप्ययुक्ता कारणाभावात् । न चानादिमत्यात्मनि बन्धो घटामटाट्यते बन्धकारणाभावात् गगनस्येव, इत्थं चैतदङ्गीकर्त्तव्यमन्यथा मुक्तस्यापि बन्धप्रसङ्गो विशेषाभावात्, तथा च सति नित्यमुक्तत्वात् मोक्षानुष्ठानवैयर्थ्यमिति । अथ द्वितीय' पक्षस्तर्हि नात्मकर्मवियोगो भवेदनादित्वादात्माकाशसंयोगवदिति मोक्षानुपपत्ति-

रिति" । यतो जीवोऽनादिनिधनः सत्त्वे सत्यहेतुकत्वात्, कर्मापि प्रवाहतोऽनादिमत्, ततो जीवकर्मणोरनादिमानेव संयोगो धर्मास्तिकायाकाशसंयोगवदिति प्रथमपक्षोक्तदूषणानवकाशः । योऽपि द्वितीय पक्षोऽभिहितोऽनादित्वात् संयोगस्य वियोगाभाव इति, सोऽप्य समीचीनः, तथाऽदर्शनात् यथा च काञ्चनोपलयो संयोगोऽनादिसन्ततिगतोऽपि क्षारमृत्पुटपाकादिसामग्रीसंयोगोपायतो विघटमानो दृष्टस्तथा जीवकर्मणोरपि ज्ञानदर्शनचारित्रोपायतो वियोग इति न कश्चिद्दोष । अथ यदनादि सर्वं कर्म ततस्तस्य जीवकृतत्वानुपपत्तिर्जीवकृतत्वेऽनादित्वविरोधात् तदसम्यक्, वस्तुतत्त्वानवबोधात्, तथाहि—जीवेन यदा यदा मिथ्यादर्शनादिसव्यपेक्षेण तदा तदुपादीयते कर्म यथा तेन जीवेन कृतमित्युच्यते । तच्च तथाप्रवाहापेक्षया चिन्त्यमानमनादिविकल्पमित्यनादि । निदर्शनं चात्र कालः यथाहि यावान् अतीतकालस्तेनाशेषेण वर्तमानत्वमनुभूतम् अथ चासौ प्रवाहतोऽनादि एव कर्मापीति । यदप्युक्तम्—मुक्तस्यापि च बन्धप्रसङ्गो विशेषाभावादिति तदप्ययुक्तम् विशेषाभावासिद्धेः । तथाहि—संसारी जीवः कषायादियुक्तस्तद्युक्तश्च कर्मणो योग्यान् पुद्गलानादत्त इति तस्य कर्मबन्धोपपत्तिः । मुक्तस्तु कषायादिपरिणामविकल शुक्लध्यानमाहात्म्यतस्तेषां समूलमुन्मूलित्वात् ततः मुक्त्यवस्थायां कर्मबन्धाप्रसङ्गः । न च वाच्यमेवं सति तर्हि निरन्तरमुक्तिगमनतो भव्यानामुच्छेदप्रसङ्गोऽनन्तानन्तसङ्ख्योपेतत्वात् । इह यद्यदनन्तसङ्ख्योपेतं तत्तत्प्रतिसमयमेकद्वि

१ सर्वे इति ग्रन्थान्तरे । २ तथा इति ग्रन्थान्तरे ।

त्रयादिसङ्ख्यया5पगच्छदपि न कदाचन निर्लेपीभवति, यथा अनागतकालः, तथा चानन्तानन्तसङ्ख्योपेता भव्या., इत्यनुच्छेदः। एवं च सत्प्रमाणप्रतिष्ठितेष्वात्मतत्त्वतदाश्रितश्रेयोऽश्रेयोऽनेकान्तमतस्वर्गापवर्गादिषु कुग्रहग्रहिलतयैवाप्रतिपद्यमान चार्वाकमवज्ञोपहतमेव कुर्वाण स्तुतिकृदाह—

**विमतिस्सम्मतिर्वापि, चार्वाकस्य न मृग्यते।**
**परलोकात्ममोक्षेषु, यस्य मुह्यति शेमुषी ॥११॥**

**चार्वाक–नास्तिकनी विमति छे के सम्मति छे, ते जोवानी कांई जरुर नथी, कारण के जेनी ( चार्वाकनी ) बुद्धि परलोक–आत्मा–मोक्षने विषे मुंझाय छे; तेनी विरुद्धता के सम्मतिनी जरुर ज नथी. (११)**

अव०–विम०। हे वीतराग ! चार्वाकस्य–नास्तिकस्य, विमतिर्विरुद्धप्रतिपत्तिः, सम्मतिः–सम्यक्प्रतिपत्तिर्वा, न मृग्यते–न विचार्यते, कुतः ?,–यस्य चार्वाकस्य शेमुषी–बुद्धिः, परलोकात्ममोक्षेषु परलोके जीवे मोक्षे च, मुह्यति मूढा स्यात् यो बालगोपालप्रसिद्धं जीवाद्यपि न जानाति तस्य का विमतिः सम्मतिर्वेत्यर्थः ॥ ११ ॥

वि०–तस्य सर्वापलापलोलुपस्य चार्वाकस्य विप्रतिपत्तिर्वा न विलोक्यते। यस्य परभवभवभृदपुनर्भवेषु सर्वमतसन्मतेष्वपि मति-

र्मुखयति । मीमांसामांसलमतिर्मीमांसकोऽपि सर्वज्ञापलापं प्रकपन् संशयमज्ञानमेकमनेकाकारं प्रतिमानानो नानेकान्त प्रतिक्षिपति । नास्तिकस्तु महापापी, तस्कथयाप्यल कल्मकौशलशालिनाम् ।

ननु तामागतादीनामुपपत्त्या साम्यस्य चार्वाकस्य तु वराकस्योपेक्षामुपक्षिप्तवान्, तत्र मीमांसामांसलमतेर्मीमांसकस्य किमिति कामपि चर्चां नाकरोदाचार्य, उच्यते–समस्तमतविशेषेण स्वयमेव प्रकारान्तरेणानेकान्तमर्थं प्रतिभ्रमान त प्रति मतिपस्युपपत्ति पिष्टमेव पिनष्टीति नास्ति पर्यनुयोगावसरः । ततः सिद्ध सर्वमत सम्मतमनेकान्तम् । यस एव चानेकान्तात्मक वस्तूपपत्तिश्रम तत स्तत्सत्त्वमप्यनेकान्तात्मकमेवेति उत्पादयन् (उपपादयन्) अधुना सर्वमतप्रपञ्चानेकान्तयुक्त्या वस्तुम परमार्थसत्त्वमाह—

तेनोत्पादव्ययस्थेमसम्मिश्र गोरसादिवत् ।
त्वदुपज्ञ कृतधियः, प्रपन्ना वस्तुतस्तु सत् ॥१२॥

ते कारणथी बुद्धिमान पुरुषो सत पदार्थ मात्रने आपना कथा मुजब गोरसनी जेम उत्पाद, व्यय अने ध्रौव्यथी सम्मिश्र–मळेला माने छे (१२)

विशेषार्थः–

" उत्पाद व्यय ध्रौव्ययुक्त सत् "
। तत्त्वार्थाधिगमसूत्रम् ।

विश्वना पदार्थ मात्र अनेकान्तनी अपेक्षाए उत्पाद, व्यय अने ध्रौव्यथी युक्त छे. आथी दूध दूधरूपे व्यय थई, दहीं रूपे उत्पाद थाय छे, अने गोरसरूपे ध्रौव्य रहे छे; ते वातने अध्यात्मोपनिषद्मां उपाध्यायजी श्रीयशोविजयजी महाराज जणावे छे के—

"उत्पन्नं दधिभावेन नष्टं दुग्धतया पयः ।
गोरसत्वात् स्थिरं जानन् स्याद्वादविज्जनोऽपि कः ?" ॥१॥

दुध खावाना नियमवाळो दहीं खातो नथी, दहीं खावाना नियमवाळो दुध खातो नथी; अने गोरस खावाना व्रतवाळो बन्ने ( दहीं-दुध ) खातो नथी एम नहिं अर्थात् बन्ने खाय छे. आथी दूधरूपे नष्ट थएलुं, अने दहींरूपे उत्पन्न थएलुं गोरसज गणाय; माटेज जेने गोरसना आहारनो त्याग होय ते जेम दूधनो आहार न करे तेम दहींनो पण आहार न ज करे । ते माटे शास्त्रवार्तासमुच्चयमां भगवान् श्रीहरिभद्रसूरि जणावे छे के—

"पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः ।
अगोरसव्रतो नोभे तस्माद्वस्तु त्रयात्मकम् ॥"

भवितुमर्हन्ति, तस्मादुत्पादादिमत्त्व सत्त्वम्। यदुवाच वाचकमुख्यः—"उत्पादव्ययध्रौव्ययुक्तं (वस्तु) सत्"। पारमर्षमपि—'उप्पन्नेइ वा विगमेइ वा धुवेइ वा' इति। तत्र द्रव्यपर्यायात्मकमितिभणनेन द्रव्यैकान्तपर्यायैकान्तवादिपरिकल्पितविषयव्युदासः। आत्मग्रहणेन चात्यन्तव्यतिरिक्तद्रव्यपर्यायवादिकणादयोगाभ्युपगतवस्तुनिरासः। यत श्रीसिद्धसेनः—"दोहिं वि नएहिं नीय। सत्थमुलूएण तह वि मिच्छत्त। ज सविसयप्पहाणत्तणेण अन्नुन्ननिरविक्खा ॥ १ ॥" इति। अथेत्थमाचक्षीथाः न द्रव्यपर्यायात्मक परमार्थसत्, एकान्तनित्यानित्यवस्तुवदनर्थक्रियाकारित्वात्, तेन च किम्, यतः—अर्थक्रियार्थी सर्वोऽपि विपश्चित्, एतच्चार्थक्रियाकारित्व नित्यानित्यात्मकेऽपि न घटासटङ्कमारोहति, यत—"प्रत्येक यो भवेद्दोषो द्वयोर्भावे कथ न स" तस्मादुत्पादव्ययस्थैममहिमाऽनर्थक्रियाकारित्वेन न वस्तुनि वास्तवी" इति चेत् ?, न, पूर्वोत्तराकारपरिहास्वीकारस्थितिलक्षणपरिणामेनास्य नित्यानित्यात्मकस्य वस्तुनोऽर्थक्रियोपपत्तेः। यत्तोऽस्मन्मते न कूटस्थनित्यस्वरूपद्रव्यरूपं वस्तु नाप्येकान्तानित्यपर्यायरूप नोभयरूप वस्तु, येन पक्षद्वयभाविदोपावकाशशङ्का, किन्तु स्थित्युत्पादव्ययात्मक शबलं जात्यन्तरमेव वस्तु, तेन तत्तत्सहकारिसन्निधाने क्रमेण युगपद्वा ता तामर्थक्रिया कुर्वत्सहकारिकृतासुपकारपरम्परामुपजीवच्च जैनमतानुसारिभिरनुश्रियते। तत सिद्धमुत्पत्तिव्ययध्रौव्ययुक्तमर्थक्रियाकारि वस्तु। ननु कथ वस्तुन्येकसामयिकमन्योन्यविरुद्ध परिकल्पयितु न्याय्यमित्याशङ्कायां वदन्ति सूरय.—गोरसादिवदिति। यथा गोरसे

स्थायिनि पूर्वोत्तरपरिणामविनाशोत्पादविभावोत्पादौ सम्भवन्तौ प्रत्यक्षादिप्रमाणबलेनोपलभ्यौ, तौ च कथमपह्नोतुं पार्येते । यदुक्तम्—"पयोव्रतो न दध्यत्ति, न पयोऽत्ति दधिव्रतः । अगोरसव्रतो नोभे, तस्माद्वस्तु त्रयात्मकम्" ॥१॥ 'तथा ! घटमौलिसुवर्णार्थी, नाशोत्पत्तिस्थितिष्वयम् शोकप्रमोदमाध्यस्थ्य, जनो याति सहेतुकम् ॥२॥" यथा च एकस्या अङ्गुल्यां स्थायिन्यां पूर्वस्थितिसरलभावाभावो वक्रतासम्भवश्च एव त्रिभुवनभवनोदरविवरवर्तिपदार्थसार्थे उत्पादव्ययध्रौव्यभाव पश्यन्तु शेमुषीमुख्याः । तत सिद्धं त्रयात्मकं वस्तु तत्त्वम् । तथा च प्रयोग विवादास्पद वस्तु, नित्यानित्यसदसत्त्वसामान्यविशेषाभिलाप्यानभिलाप्याद्यात्मकम्, तथैवास्खलत्प्रत्ययेन प्रतीयमानत्वात् । यद्[1] यथैवास्खलत्प्रत्ययेन प्रतीयमान तत्तथैव तत्त्वम् यथा घटो घटरूपतया प्रतीयमानो घट एव, न पट तथैव चास्खलत्प्रत्ययेन प्रतीयमान वस्तु, तस्मान्नित्यानित्याद्यात्मकम् । न चात्र स्वरूपासिद्धो हेतुः तथैवास्खलत्प्रत्ययेन प्रतीयमानत्वस्य सर्वत्र वस्तुनि विद्यमानत्वात् नहि स्वरूपपररूपाभ्यां भावाभावात्मकत्वेन द्रव्यपर्यायरूपादिभिर्नित्यानित्याद्यात्मकत्वेन सर्वस्मिन्पदार्थे प्रतिभासः कस्यचिदसिद्ध । तत एव न सन्दिग्धासिद्धोऽपि न सत्यभावरूपतया प्रतीयमानस्य वस्तुन सन्दिग्धत्वं नाम । नापि विरुद्ध-, विरुद्धार्थसंसाधकत्वाभावात् न चैकान्तेऽपि तथैवास्खलत्प्रत्यय प्रतीयमानत्वमास्ते येन विरुद्धः स्यात् । नापि पक्षस्य प्रत्यक्षादि

---

१ 'यद् इतत आरभ्य प्रतीयमानत्वस्य इतिपर्यन्तः पाठः प्रथममुद्रितपुस्तके नास्ति ।

वि०—हे समग्रशुभशक्तिसमाज ! नाथ ! तव सम्बन्धिनी सम्‌-सम्यग्रूपां बोधिं ज्ञानमज्ञानलभ्यां पुण्ययोगात् प्राप्य-लब्ध्वापि मनोवाक्कायकर्मदैर्मनोवचमनवनुसमुत्सवैः पापानुबन्धिभिर्दुष्टचेष्टितैर्मया समयेव स्वशिरसि भनसः मज्जालिव । किमुक्त भवति ?, यथा—कोऽपि केनापि कृपालुना व्याधितावस्थ्यावाक्तयोऽभ्यस्तवैरितया पुनः स्वमूर्ध्नि वहन् दीपयति तथा ममापि मयाऽऽत्मसात् दुर्लभां निर्वृतिपुरीमलामनिरुपहतवर्तिनीं तव बोधिं लब्ध्वापि निरर्गलदुःप्रयोगविचेष्टितैर्दुर्गतिषु स्वात्मानमनुपनयता शिरस्यनल इव व्याक्षिप्त., तस्वतस्तेतदपि मायारिविलसितमेव ॥ ५ ॥

तदेव पुनर्दर्शयति—

त्वय्यपि त्रातरि त्रातर्यन्मोहादिमलिम्लुचैः ।
रत्नत्रयं मे ह्रियते, हताशो हा ! हतोऽस्मि तत् ॥६॥

हे रक्षक ! आप रक्षण करनार विद्यमान छतां मोहादि चोरो मारां ज्ञान, दर्शन अने चारित्ररूप त्रण रत्नो हरण करी जाय छे, तेथी हा ! हताश थयो हुं हणाई गयो छुं ! (६)

अथ त्वय्य०—हे त्रातर् ! त्वय्यपि त्रैलोक्यपरत्राणमे त्रायके सति च मम ज्ञानदर्शनचारित्रमयं मोहादिचौरैर्ह्रियते मुष्यते तदहं हा इति खेदे हताशः मायाधिकरत्नत्रयहरणात् हतोऽस्मि—व्यापादितोऽस्मि ॥ ६ ॥

वि०—हे त्रातर् ! भावारिविधुरितभव्याङ्गिवर्गपालक ! त्वयि त्रिभुवनजनपरित्राणप्रवीणपराक्रमे त्रातरि पुर सत्यपि यन्मोहादिभिर्मलिम्लुचैः पाटच्चरैर्मे–मम त्वयैव प्रसादितं ज्ञानदर्शन-चारित्ररूप रत्नत्रय ह्रियते–बलाद्विलुप्यते। हा इति खेदे तदह् हत एव हताशः। युक्त च हताशत्व !, यतः प्रभोरसमक्षं यत् किमपि विलुप्यते तत्र किल स्वस्वामिनिवेदनेन प्रत्यानयिष्याम्यहमात्मीयं वस्त्विति भवत्येव प्रत्याशा, स्वामिसमक्ष तु गते वस्तुनि कौत-स्कुती प्रत्याशेति ॥ ६ ॥

ननु वीतरागतया यदि युष्मान् युष्मदाराध्योऽयमवधीरयति, तत्किमित्यनुत्साहहतैस्तीर्थान्तरोपास्तिर्न विधीयत इत्याशङ्क्याह—

**भ्रान्तस्तीर्थानि दृष्टस्त्वं, मयैकस्तेषु तारकः ।**
**तत्तवाङ्घ्रौ विलग्नोऽस्मि, नाथ ! तारय तारय॥७॥**

**हुं घणा तीर्थोमां भटक्यो छुं, परन्तु ते सर्वमां में आपने ज एक तारक तरीके जोया छे. ते कारणे हु आपना ज चरणोने विषे वळग्यो छुं, माटे हे नाथ ! आप कृपा करीने मने तारो, तारो. (७)**

अव० भ्रान्त०—हे वीतराग ! अहं तीर्थानि लौकिक-लोकोत्तराणि भ्रान्तो गतस्तेषु त्वमेव एको मया संसारता-रणक्षमो ज्ञातस्ततस्तव पादे विलग्नोऽहमस्मि। हे नाथ अतः कारणात् त्व मां तारय तारय संसारसागरान्निस्तारय निस्ता-रयौत्सुक्यतो वीप्साऽत्र ॥ ७ ॥

वि०—हे स्वामिन् ! माहमनुत्साहहृदः !, किन्तु पुरैव नि- खिलम्यपि सौगतादितीर्थानि भ्रान्त्वा–पर्यटितं, तेषु च मध्ये त्व मेवैकः संसारपारावारतारणक्षम तीर्थं इव–साक्षात्कृत । तदस्मा- दह तवैवांह्री विलग्नस्तवचरणमलिनमूलमाकम्पितस्तदेव हे नाथ ! मामस्मात् संघतिपाथोनाथात् त्वरितं तारय तारय परमपदपरतटं च मापय । अत्यन्तार्तिख्यापनाय तारयेति द्विरुक्तिः ॥ ७ ॥

न चाहं सर्वथैवायोग्यस्त्वदनुग्रहस्य, यत —

भवत्प्रसादेनैवाहमियतीं प्रापितो भुवम् ।
औदासीन्येन नेदानीं, तव युक्तमुपेक्षितुम् ॥८॥

हे नाथ ! आपनी महेरपानीथी ज हुं आटली भूमिकाने–आपनी सेवानी योग्यताने पाम्यो छुं, माटे हवे उदासीनपणावडे मारा तरफ उपेक्षा करवी आपने योग्य नथी (८)

अव० भव०—हे वीतराग ! अहं त्वत्प्रसादनैव तव प्रसादितयैवेयतीं त्वद्रूपास्तियोग्यां भुवं सुदशां प्रापितो नीत स्तत इदानीमधुनौदासीन्येन माध्यस्थ्येनोपेक्षितुमुपेक्षां कर्तुं तव नोचितं–नोपक्षणीयः मवथा ॥ ८ ॥

वि०—हे भगवन् ! अहं भवत्सम्पाभिना प्रसादेनानुग्रहेणैव इयतीं त्वदुपास्तिमुक्तिविज्ञप्तियोग्यां भुवं सुदशां प्रापित–समा नीतोऽस्मि । तदिदानीमपि विशेषतस्त्वत्सम्य तव औदासीन्येन

माध्यस्थ्येनोपेक्षितुं न युक्तम्, आश्रितोपेक्षणं हि न सुस्वामिधर्म इति ॥ ८ ॥

न च त्वं मां मोहादिभिर्विडम्ब्यमानं न वेत्सि, यतः—

**ज्ञाता तात ! त्वमेवैकस्त्वत्तो नान्यः कृपापरः ।**
**नान्यो मत्तः कृपापात्रमेधि यत्कृत्यकर्मठः ॥९॥**

**हे तात ! आप ज एक ज्ञाता छो. आपनाथी अधिक बीजो कोई दयाळु नथी, अने माराथी अधिक बीजो कोई दयापात्र नथी. करवा लायक कार्यमां आप कुशळ छो, तेथी जे करवा योग्य होय ते करवामां तत्पर थाओ. (९)**

अव० ज्ञाता०—हे तात ! पितस्त्वमेवैकोऽद्वितीयः ज्ञातासि, सर्वोपायचतुरोऽसि, ज्ञात्रापि दयारहितेन किं स्यादित्याहुः । त्व० त्वत्तोऽन्यः कृपापरोनास्ति । नेनापि किं यदि दयाविषयोऽत्र न स्यादिति पुनराहुः । नान्यो० अन्यः–परो मत्तः कृपापात्रं करुणास्थानं नास्ति । एवं सति त्वं यत्र यत्कृत्यं यद्विधेयं तत्र कर्मठस्तत्परः एधि भव ॥ ९ ॥

इति षोडशप्रकाशस्यावचूर्णि ।

वि०—हे तात ! सयमशरीरोत्पादक ! त्वमेवैकोऽप्रतिहतज्ञानदृष्टिर्मम दुर्दशाया ज्ञाता, ननु जानानोऽप्यकरुणः कथं परमनुगृह्णातीत्याह–त्वत्तोऽप्यन्य –परः क इव जगति निष्कारणकारु-

पिक, न च मत्तो मत्सकाशादन्यपर कोऽपि मत्प्रिभानां कृपापात्रं दयास्थानम् । तस्मादेव सति त्वदेकशरणे मयि किङ्करे तव सुत्वा मितो मत्कृत्यं मद्विधेय सत्र कर्मणि त्वं कर्मठ–शूर पवि मम । यथा चाहमपि मत्नानिव मत्तममानाममाधन मवामि तथा मत्री वेत्तिमाव ॥ ९ ॥

इति श्रीवीतरागस्तोत्रे षोडशस्यात्मगर्हास्तवस्य पदयोजना ।



एवं स्तुतिकृदात्मगर्हास्तवेन श्रीमतार्ति विज्ञप्य साम्प्रत सर्वात्मना परमात्मानं शरणं प्रपित्सु शरणस्तवमाह—

स्वकृत दुष्कृत गर्हन्, सुकृत चानुमोदयन् ।
नाथ ! त्वच्चरणौ यामि, शरण शरणोज्झित ॥१॥

हे नाथ ! करेलां दुष्कृतनी गर्हा करतो, अने करेलां सुकृतनी अनुमोदना करतो, अन्यना शरणथी रहित एवो हु, आपना चरणोना शरणने अंगीकार करु छु (१)

अथ शरणप्रतिपत्तिमाह:—

अथ॰ स्वकृत॰—हे नाथ ! अनन्तभवेष्वात्मना निष्पादित दुरित निन्दंस्त्वदनुग्रहादि धाऽनुमोदयम् मनुमन्यन् स्वदपरशरणरहितस्त्वत्पादौ शरण यामि–भयामि ॥१॥

वि०—हे नाथ ! योगक्षेमकारिन् ! अहं त्वच्चरणौ शरणं यामि, किं कुर्वन् ?, स्वकृत दुष्कृतं गर्हन् स्वयमात्मनानादौ ससारे मिथ्यात्वादिबन्धहेतुसान्निध्यात्कृत बद्धनिधत्तादिरूपेणोपनिबद्धं यद्दुष्कृत प्राणातिपाताद्यष्टादशपापस्थानरूप तद् गर्हन् 'हा दुष्ट-मिद कर्म मया कृतम्' इति सानुताप निरन्तरमनुस्मरन् । तथा सुकृत स्वकृतमेवाश्रवद्वारसवरणलक्षणमनुमोदयन् सानन्दमन्तर्वि-भावयन्, त्वच्चरणौ–त्वत्क्रमौ शरण यामि–प्रपद्ये । किं विशिष्ट ?, शरणोज्झितो भावशत्रुसंत्रासादशरण. ॥ १ ॥

दुष्कृतगर्हामेवाह—

**मनोवाक्कायजे पापे, कृतानुमतिकारितैः ।**
**मिथ्या मे दुष्कृतं भूयादपुनःक्रिययान्वितम् ॥२॥**

**हे भगवन् ! करवा, करावचा अने अनुमोदवा-वडे मनवचनकायाथी थयेला पापने विषे जे दुष्कृत लाग्युं होय, ते आपना प्रभाववडे फरी वार नहीं कर-वानी प्रतिज्ञापूर्वक मारुं ते दुष्कृत मिथ्या थाओ. (२)**

अव० मनो०—हे वीतराग ! मनोवचनकायभवे पापे दुश्चिन्तितदुर्भाषितदुश्चेष्टितरूपे करणकारणानुमोदनैकगुणभू-तैर्मे–मम दुष्कृतं मिथ्याऽकृतमिव भूयाद्भवतु । कथंभूतं मि-थ्यादुष्कृतम् ?, अन्वितं–सहितम्, कयाऽपुनः क्रिययाऽपुनः-करणेन ॥ २ ॥

वि०—हे भगवन् ! मनोवाक्कायके मनोवचनतनुसमुद्भवे दुश्चिन्तितदुर्भाषितदुश्चेष्टितरूपे पापे—कल्मषे कृतानुमतिकारितै करणकारणानुमतिभिर्यन्मे पुराकृतं दुष्कृतं—दुष्कर्म तत्तवाचिन्त्यम हिमो माहात्म्यात् मिथ्या—मृषास्तु कृतमप्यकृतमिव भवतात्, कथम् ? अपुन क्रियमाणमिति अपुनःकरणेन युक्तम् । किमुक्तं भवति ?, किल यस्य हि पापस्य मिथ्यादुष्कृतरूपं प्रायश्चित्तमुपाप यद्यपि भूयोऽपि विधीयते तदा तन्मिथ्यादुष्कृतं कुम्भकारमिथ्या-दुष्कृतमिव वृथैव स्यादित्यपुन क्रियमेत्युक्तम् ॥ २ ॥

सुकृतानुमोदनमाह—

यत्कृत सुकृत किञ्चिद्, रत्नत्रितयगोचरम् ।
तत्सर्वमनुमन्येऽहं, मार्गमात्रानुसार्यपि ॥ ३ ॥

**हे नाथ ! रत्नत्रयीमा मार्गने मात्र अनुसरता थाळु एवु पण जे कांई सुकृत में कर्यु होय, ते सर्वनी हु अनुमोदना करु छु (३)**

**अव०** यत्कृतं०—हे वीतराग ! मद् ज्ञानादिविषय किञ्चित्सुकृतं पुण्यं सदाचारो विहितस्तत्सर्वमहमनुमोद यामि । मार्ग० स्वन्मतमार्गानुसार्येव नत्वन्यद् ॥ ३ ॥

वि०—हे स्वामिन् ! मन्मया तथाविधशुभसामग्रीसंयोगेन किञ्चिदल्पमपि सुकृत रत्नत्रितयगोचरं ज्ञानदर्शनचारित्रानुगत कृतमुपार्जितं तत्सर्वमहमनुमन्ये सम्मोदमनुमोदयामि, किं विशिष्टो

ऽहं[१], मार्गमात्रानुसार्यपि ज्ञानादियुक्तमार्गमात्रप्रविष्टोऽपि अयमाशयः 'किल ज्ञानादयो हि यदैव सम्यगासेविताः स्युस्तदैवानुमोदनेन पुण्योपचयं कुर्युः, अहं तु रत्नत्रयमार्गानुसार्येव न तु यथोक्तकारी, तथाकृते हि मुक्तैव स्यात्, तथापि यदल्पमपि ज्ञानादिगोचरं सुकृतं कृतं तदप्यनुमोदयामीति'। मार्गमात्रानुसार्यपीति सुकृतविशेषणं वा ॥ ३ ॥

पुनः सुकृतानुमोदनमाह—

**सर्वेषामर्हदादीनां, यो योऽर्हत्त्वादिको गुणः ।**
**अनुमोदयामि तं तं, सर्वं तेषां महात्मनाम् ॥४॥**

**अरिहंत, सिद्ध, आचार्य, उपाध्याय अने साधुओने विषे जे जे अरिहंतपणुं, सिद्धपणुं, पंचाचारना पालनमां प्रवीणपणुं, सूत्रोनुं उपदेशकपणुं अने रत्नत्रयीनुं साधकपणुं विगेरे जे जे गुणो छे ते ते सर्व गुणोनी हुं अनुमोदना करुं छुं. ( ४ )**

अव० सर्वे०—हे वीतराग ! सर्वेषामर्हत्सिद्धाचार्योपाध्यायसाधुश्राद्धानां यो योऽर्हत्त्वसिद्धत्वाध्यापनादिको गुणोऽस्ति तं तमहमनुमन्ये सकलं तेषां महामहिम्नाम् ॥४॥

वि०—सर्वेषां नामस्थापनाद्रव्यभावभेदानां अतीतवर्त्तमानानागतरूपाणां सर्वास्वपि कर्मभूमिषु समुत्पन्नानामर्हदादीनां अर्हत्सिद्धाचार्योपाध्यायसाधूनां यो योऽर्हत्त्वादिको गुणः, यथा—अर्ह-

वि०—हे भगवन्! मनोवाक्कायजे मनोवचनतनुसमुद्भवे दुश्चिन्तितदुर्भाषितदुश्चेष्टितरूपे पापे—कल्मषे कृतानुमतिकारिते करणकारणानुमतिभिर्निष्पन्ने पुराकृत दुष्कृतं—कुकर्म तवाचिन्त्यमहिम्नो माहात्म्यात् मिथ्या—मृषास्तु कृतमप्यकृतमिव जायताम्, कथम्? अपुनःक्रिययान्वितः अपुनःकरणेन युक्तम्। किमुक्तं भवति? किन्तु अस्य हि पापस्य मिथ्यादुष्कृतरूपं प्रायश्चित्तमुपाय तथापि भूयोऽपि विधीयते तथा तन्मिथ्यादुष्कृतं कुम्भकारमिथ्या-दुष्कृतमिव वृथैव स्यादित्यपुनःक्रियमेत्युक्तम् ॥ २ ॥

सुकृतानुमोदनमाह—

यत्कृतं सुकृतं किञ्चिद्, रत्नत्रितयगोचरम्।
तत्सर्वमनुमन्येऽहं, मार्गमात्रानुसार्यपि ॥ ३ ॥

हे नाथ! रत्नत्रयीना मार्गने मात्र अनुसरना थाळु एवु पण जे कांई सुकृत में कर्युं होय, ते सर्वनी हुं अनुमोदना करूं छुं (३)

अव० यत्कृतं०—हे वीतराग! यद् ज्ञानादिविषयं किञ्चित्सुकृतं पुण्यं सदाचारो विहितस्तदखिलमहमनुमोदयामि। मार्ग० रत्नत्रयमात्रानुसार्येव सन्नपि ॥ ३ ॥

वि०—हे स्वामिन्! मया तथाविधशुभसामग्रीसंयोगेन किञ्चिदल्पमपि सुकृतं रत्नत्रितयगोचरं ज्ञानदर्शनचारित्रानुगत कृतमुपार्जितं तत्सर्वमहमनुमन्ये सम्यगहमनुमोदयामि, किं विशिष्टो-

मलपटलनिगलनलघुमूतत्वेन लोकाग्रगतान्, किं विशिष्टान् ?, त्वत्फलभूतान्, अर्हताम् हि सिद्धत्वमेव फलम्, तथा त्वत्सम्बन्धि कुवासनापाशविशसनं यच्छासनं तत्र रतानासक्तमनसो मुनीन्-मुमुक्षून्, तथा अपारसंसारपारावारपरपारप्रापणयानपात्रप्रतिमं त्वच्छासन च शरण प्रतिपन्न सश्रितोऽस्मि । कथ ?, भावतो भावशुद्ध्या न तु परोपरोधादिना, भाव विना कृत हि जिनशासनाद्यनुसरणं व्यापन्नदर्शनानामिवाफल अवमफल वेति ॥ ५ ॥

एव दुष्कृतगर्हासुकृतानुमोदनशरणगमनानि विधाय सत्त्वक्षामणामाह-

**क्षमयामि सर्वान्सत्त्वान्सर्वे क्षाम्यन्तु ते मयि ।**
**मैत्र्यस्तु तेषु सर्वेषु, त्वदेकशरणस्य मे ॥ ६ ॥**

**हे नाथ ! सर्व प्राणीओने हुं खमावुं छुं-क्षमा आपुं छुं. सर्व प्राणीओ मने खमावो-मारा उपरनी कलुपताने तजीने क्षमा आपो. आपना ज एक शरणने प्राप्त थयेला मने ते सर्वने विषे मैत्री-मित्रभाव-हितबुद्धि हो. ( ६ )**

अव० क्षम०—हे वीतराग ! सर्वान् चतुरशीतिलक्षजीवयोनिगतान्जीवानहं क्षमयामि-क्रोधोपशमेन निर्वापयामि, सर्वे ते मयि-मद्विषये क्षाम्यन्तु क्रोधं त्यजन्तु तेषु निखिलेषु त्वदेकशरणस्य मम मैत्री हितबुद्धिरस्तु ॥ ६ ॥

तामर्हत्त्वम्, सिद्धानां सिद्धत्वम्, आचार्याणां पञ्चविधाचारचातुर्यत्वम्, उपाध्यायानां समयसूत्रोपदेशकत्वम्, साधूनां रत्नत्रयसाधकत्वम्, इत्यादिको यो गुणस्तमहं सर्वमशेषमप्यनुमोदयामि। गुणिगुणानुमोदनं भवेतनमनचरपपपापेममतस्तेषां महात्मनां पुण्यकीर्तनानामहमपि गुणाननुमोदयामि ॥ ४ ॥

एवं दुष्कृतगर्हासुकृतानुमोदने विधाय प्रस्तुत शरणगमनमाह–

त्वां त्वत्फलभूतान् सिद्धांस्त्वच्छासनरतान्मुनीन्।
त्वच्छासन च शरण, प्रतिपन्नोऽस्मि भावतः॥५॥

हे भगवन्! माथ अरिहन्त एवा आपनु, आपना फलभूत (अरिहन्तोनु फळ सिद्ध छे) सर्व कर्मथी मुक्त थयेला अने लोकना अग्रभाग उपर रहेला सिद्ध-भगवन्तोनु आपना शासनमां रक्त थयेला मुनिवरोनु अने आपना शासननु शरण में भावथी स्वीकार्यु छे (५)

अव० त्वां त्व०—हे वीतराग! त्वां त्वत्फलभूतौ त्वदनुष्ठानफलरूपान्मोक्षप्राप्तान् सिद्धांस्त्वदाधारचतुरान् पीन् त्वत्प्रवचन चाह भावतो हृदयप्रणिधिः शरणं प्रतिपन्नोऽस्मि श्रितोऽस्मि ॥ ५ ॥

वि०—हे भगवन्! अहमेतदेतच्छरणं प्रपन्नोऽस्मि। किं तदित्याह–त्वां भावार्हद्रूपं भवन्तम्, तथा सिद्धान्, सकलकर्म-

मलपटलनिगलनलघुभूतत्वेन लोकाग्रगतान्, किं विशिष्टान् ?, त्व-त्फलभूतान्, अर्हताम् हि सिद्धत्वमेव फलम्, तथा त्वत्सम्बन्धि कुवासनापाशविशसनं यच्छासन तत्र रतान्नासक्तमनसो मुनीन्–मुमुक्षून्, तथा अपारससारपारावारपरपारप्रापणयानपात्रप्रतिम त्वच्छासन च शरण प्रतिपन्न. संश्रितोऽस्मि । कथ ?, भावतो भावशुद्ध्या न तु परोपरोधादिना, भाव विना कृत हि जिनशासनाद्यनुसरणं व्यापन्नदर्शनानामिवाफल अवमफल वेति ॥ ५ ॥

एव दुष्कृतगर्हासुकृतानुमोदनशरणगमनानि विधाय सत्त्व-क्षामणामाह–

**क्षमयामि सर्वान्सत्त्वान्सर्वे क्षाम्यन्तु ते मयि ।**
**मैत्र्यस्तु तेषु सर्वेषु, त्वदेकशरणस्य मे ॥ ६ ॥**

**हे नाथ ! सर्व प्राणीओने हुं खमावुं छुं–क्षमा आपुं छुं. सर्व प्राणीओ मने खमावो–मारा उपरनी कलुषताने तजीने क्षमा आपो. आपना ज एक शरणने प्राप्त थयेला मने ते सर्वने विषे मैत्री–मित्र-भाव–हितबुद्धि हो. ( ६ )**

अव० क्षम०—हे वीतराग ! सर्वान् चतुरशीतिलक्ष-जीवयोनिगतान्जीवानहं क्षमयामि–क्रोधोपशमेन निर्वापयामि, सर्वे ते मयि–मद्विषये क्षाम्यन्तु क्रोधं त्यजन्तु तेषु निखिलेषु त्वदेकशरणस्य मम मैत्री हितबुद्धिरस्तु ॥ ६ ॥

वि०—हे क्षमाप्रधान ! अहं सर्वानेकेन्द्रियादीन् पञ्चेन्द्रियपर्यवसानान् शत्रुमित्रउदासीनपरिचितापरिचितभेदान् सत्त्वान् प्राणिनः स्वापराधस्वीकारेण क्षमयामि–क्षमां ग्राहयामि, तेऽपि सत्त्वा मयि विषये कलुषतां विमुच्य क्षाम्यन्तु तितिक्षायुतमनसो भवन्तु, एवं च सति तेषु सर्वेष्वपि विषये मम मैत्री पूर्वोदितस्वरूपा अस्तु। किं विशिष्टस्य मम ?, त्वदेकशरणस्मरणमात्रशरणस्य ॥ ६ ॥

एवं सत्त्वक्षामणां विधाय ममत्वपरिहारार्थमेकत्वभावनां भावयन्नाह—

एकोऽहं नास्ति मे कश्चिन्नचाहमपि कस्यचित्।
त्वदङ्घ्रिशरणस्थस्य, मम दैन्यं न किञ्चन ॥७॥

हे नाथ ! हु एकलो छुं, मारु कोई नथी अने हु पण कोईनो नथी, छतां पण आपना चरणना शरणमां रहेला मने कांई पण दीनता नथी (७)

अव० एको०—हे वीतराग ! अहमेकाकी पितृमातृपुत्रशिष्यादिषु निर्ममत्वान्मम नास्ति कश्चित्। अहमपि कस्यचित्कस्यापि सम्बन्धी नास्मि। एवं सति स्वस्यैकस्य दैन्यं नावधार्यमित्याह। त्वद्० तव चरणशरणस्थितस्य मम दैन्यं किञ्चन नास्ति ॥ ७ ॥

वि०—हे विश्वजनीन ! यदेतत् कलत्रपुत्रधनधान्यादि यदि मुग्धैरात्मीयत्वेन व्यपदिश्यते तदपि न तावत्परमवादात्मना सम

समेति, न वाप्येन तत्र गच्छन्तमनुगच्छति, तस्मात् पृथग्भूतमेवे-दमात्मनः । एव च सत्यहं द्रव्यतः सपरिच्छदोऽपि भावत एक एव । न चैतेषु स्वकार्यतात्पर्यवस्तुबान्धवादिषु कश्चिन्मम सम्बन्धी । न चाहमपि स्वकृत(कर्म)फलोपभोक्ता अमीषा सम्बन्धी । नन्वेव-मेकान्तेनैककस्य तव महद्दैन्यमित्याशङ्क्याह—न च मम त्वदङ्घ्रिशरण-स्थस्य प्रतिपन्नत्वच्चरणशरणस्य किञ्चन स्वल्पमात्रमपि दैन्यं—दीनता, प्रत्युत आत्मारामस्य परम स्वातन्त्र्यसुखमेव ॥ ७ ॥

न च मत्पालनपरिश्रमोऽपि स्वामिनश्चिरकालभावीति दर्शय-न्नाह—

**यावन्नाप्नोमि पदवीं, परां त्वदनुभावजाम् ।**
**तावन्मयि शरणत्वं, मा मुचः शरणं श्रिते ॥८॥**

हे विश्ववत्सल ! आपना प्रभावथी मळनारी उत्कृष्ट पदवी–मुक्तिस्थान मने प्राप्त न थाय त्यां सुधी आपना शरणे आवेला मारा उपर शरण्य-पणाने–शरणने उचित पालकपणाने मूकशो नहि. (८)

अव० याव०—हे वीतराग । अहं त्वदनुभावजां त्व-त्प्रसादसम्भवां परां प्रकृष्टां पदवीं मुक्तिलक्षणां यावन्नासाद-यामि तावत् शरणङ्गते मयि शरण्यत्वं शरणागतवत्सलतां मा मुचः–मा त्यज ॥ ८ ॥

इति सप्तदशप्रकाशस्यावचूर्णिः ।

वि०—हे विश्ववत्सल ! यावदहं त्वदनुभावयां सर्वाद्भुतकसम भावममवाम्, परां परानन्दस्वरूपाम्, पदवी–मुक्तिस्वरूपाम्, नाप्नोमि–न लभे, तावन्मयि शरणं श्रिते चरणतलनिलीने, शरण्यस्य शरणोपगतसंस्योचितं पालकत्वम्, मा मुञ्च मा–त्याक्षीः, मामम परमपदवीं स्वस्त्र्यैव विलम्बं करिष्ये कस्यापि शरणादिमार्गं मार्गैन्यमिति ॥ ८ ॥

इति श्रीवीतरागस्तोत्रे सप्तदशस्य शरणस्तवस्य पदयोजना ।



एवं स्तुतिकृविसगत्तुत्यस्मरणानुसरणसावद्यम्मस्वादितरदेवानि मृत्नमुपहसितुकामः परिणामसुकुमारयापि मनुसपरुषया गिरा भगवन्तं तुष्टुष् । कठोरोक्तिस्तवमाह–तस्य चार्थं मस्तावनाश्लोकः–

## न परं नाम मृद्वेव, कठोरमपि किञ्चन ।
## विशेषज्ञाय विज्ञप्य, स्वामिने स्वान्तशुद्धये ॥१॥

केवळ कोमळ वचनथी ज नहि, किन्तु विशेषज्ञ-एकान्त हितकर एवा स्वामीने अंतःकरणनी शुद्धि माटे कांइ कठोर वचनथी पण विनति करवी जोइए १

मर्म शरणतया भ्रपयोपेक्षाविगममयाः (?) किञ्चित्कठोरं विज्ञपयन्ति ।

अव० न पर०—हे वीतराग ! विज्ञपज्ञाय एकान्त

हितैषिणे स्वामिने नाम इति कोमलामन्त्रणे परं केवलं मृद्वेव वादेन न विज्ञप्यम्, किन्तु किञ्चन कियत्कठोरं कठिनमपि स्वचित्तेऽज्ञानेनाप्रतिभासमानं स्वान्तशुद्धये संशयापनोदाय ज्ञाप्यते तत्क्षणम् ॥ १ ॥

वि०—हे भगवन्! एवंविधाय स्वामिने परं केवलं मृदु सुललितमेव न विज्ञप्यम्, किन्त्वन्तरान्तरा किञ्चन स्वल्पमात्र कठोरं परुषप्रायमपि। किं विशिष्टाय स्वामिने ?, विशेषज्ञाय वक्तुरभिप्रायविशेषविदुषे। अयमभिसन्धिः। यः किलोत्तानमतित्वेन यथाश्रुतयथादृष्टार्थमात्रग्राही प्रभुस्तं प्रति तन्मनोरतये सुकुमारमेव वाच्यम्, यस्तु देशकालप्रस्तावौचित्यपुरुषतदाशयविशेषविद्वांस्तं प्रति यथार्थभाषिभिर्भृत्यैरनुकूलमितरच्चादुष्टभावैर्विज्ञप्यम्, तद्भावज्ञेन स्वामिनापि तदवधार्यमेव, यतः "स किंसखा साधु न शास्ति योऽधिप हितान्न यः सश्रृणुते स किंप्रभुः" किमर्थमित्याह—स्वान्तशुद्धये स्वमनःकुविकल्पकल्पनापोहाय ॥ १ ॥

कठोरोक्तिमेव व्यनक्ति—'न पक्षी त्यादितस्तदेवम्' इति पञ्चमश्लोके सम्बन्धः। हे भगवन्! त्वं परीक्षकैः कथं देवत्वेन प्रतिष्ठाप्यः ?, यतः सर्वदेवेभ्यो विलक्षणः। कथम् ?, एवमुच्यमानप्रकारेण, तदेव दर्शयति—

**न पक्षिपशुसिंहादिवाहनासीनविग्रहः।**
**न नेत्रगात्रवक्त्रादिविकारविकृताकृतिः ॥ २ ॥**

**हे स्वामिन्! लौकिक देवनी जेम आपनुं शरीर**

हंस गरुडादि पक्षी, छाग वृषभादि पशु अने सिंह व्याघ्रादि जानवरोरूपी वाहन उपर आरूढ थयेल नथी; तेमज आपनी आकृति पण ते देवोनी जेम नेत्र–लोचन, गात्र–शरीर अने वक्त्र–मुखादिना विकारोवडे विकृत थयेली नथी (२)

अथ पञ्चभिः श्लोकैः सम्बन्धः ।

अव० न पक्षि०—हे वीतराग ! पक्षिणो हंसगरुडादयः, पशवोऽजवृषादयः, सिंहा मृगेन्द्रास्तदादीनि यानि वाहनानि तेष्वासीनोऽधिरूढो विग्रहः कायो यस्य स एवंविधस्त्वं नासि । नयनवदनशरीराणां ये विकारा रागद्वेषनिष्पादितास्तैः विकृता विरुद्धावस्थां प्रापिता आकृतिः–संस्थान यस्य स एवंविधोऽपि त्वं नासि हरिहरादिवत् ॥ २ ॥

वि०—ये किमस्मिन् लोके अस्माभिर्देवा ददृशिरे ते पक्षिप्रमुखवाहनासीनविग्रहा विकृतमूर्तिधामविन्यस्तवपुषः । तथाहि–ब्रह्मविष्णुस्कन्दा यथाक्रमं हंसगरुडमयूरगामित्वेन पक्षिवाहना, तथा ईश्वरवैश्वानरमारुता यथाक्रमं वृषमेषमृगगामित्वेन पशुवाहना भवानी च सिंहवाहना आदिशब्दात्खरवाहनमनवाहनादित्रिदशपरिग्रह । त्वं तु पक्षिप्रमुखके नैकस्मिन्नपि वाहने विन्यस्तदेहस्तत एवेतरदेवेभ्यो विलक्षणः । तथा–देवा हि नेत्रवक्त्रगात्रादिविकृतिभृत एवास्माभिरुपलभ्यन्ते, यथा–त्रिनयन–शम्भुः, चतुर्वक्त्रः–स्वयम्भूः, षण्मुख –महासेनः, चतुर्भुज –विष्णुः, गजा

स्यो लम्बोदरश्च गणेश इत्यादि । त्वं तु नेत्रवक्त्रादिविकारैरपि न विकृताकृतिः, किन्तु निर्विकारसर्वावयसुन्दरस्तदेवमप्यन्यदेवेभ्यस्त्वं विसदृशः ॥ २ ॥

तथा—

**न शूलचापचक्रादिशस्त्राङ्ककरपल्लवः ।**
**नाङ्गनाकमनीयाङ्गपरिष्वङ्गपरायणः ॥ ३ ॥**

**हे नाथ ! अन्य देवोनी जेम आपना हस्तपल्लव त्रिशूल, धनुष अने चक्रादि शस्त्रोथी चिह्नित थया नथी. तेमज आपनो उत्संग-खोळो स्त्रीओना मनोहर अंगने आलिंगन करवामां तत्पर बन्यो नथी. (३)**

**अव० न शूल०—हे वीतराग ! शूलधनुश्चक्रादीनि शस्त्राण्यङ्के–उत्सङ्गे येषामीदृशौ करपल्लवौ यस्य स ईदृक्षो नासि । तथा सुभगरामाङ्गालिङ्गनपरो नासि ॥ ३ ॥**

वि०—देवा हि शूलचापचक्रादिभिः शस्त्रैरङ्कितकरपल्लवाः स्युः, यथा–शूलभृत्पिनाकपाणिश्च हरः, शार्ङ्गभृच्चक्रधरश्च हरिः, शक्तिधरः कुमारः, परश्वधायुधः सिन्धुरास्य इति । तव तु पाणिपल्लवौ रेखारूपैरेव चापचक्रादिभिर्लाञ्छितौ न पुनरितरैः । तथा ते हि अङ्गनाकमनीयाङ्गपरिष्वङ्गपरायणाः कमनीयकामिनीमनोहरशरीरपरिरम्भसुभगमविष्णवः, तथाहि–गङ्गागौरीभ्यां गिरीशः,

गाविन्नी(गायत्री)सावित्रीभ्यां प्रजापतिः, राधारुक्मिणीभ्यां कमलाविलासी नित्यमाश्लिष्ट एवास्ते, स तु स्वामोऽप्यपरिष्वीलितकलितकस्त्राजन ॥ ३ ॥

तथा—

न गर्हणीयचरितप्रकम्पितमहाजनः ।
न प्रकोपप्रसादादिविडम्बितनरामरः ॥ ४ ॥

हे नाथ ! अन्य देवोनी जेम निन्दनीय चरित्र वडे आपे महाजन-उत्तम पुरुषोने कंपायमान कर्या नथी तेमज प्रकोप-क्रोध अने प्रासाद-कृपावडे आपे देव अने मनुष्योने विडम्बित कर्या नथी (४)

अय० न गर्ह०—हे वीतराग ! गर्हणीयैर्निन्द्यैः स्वसुतारिरंसाऋषियोपिदुपलालनप्रमथशिरश्छेदगोवधप्रमृतिभिश्चरितैः प्रकम्पिताः करुणाकातरीभूताः महाजना उत्तमा यन स तैस्त्वादृशः प्रकोपप्रसादादिभिर्विडम्बिता विगोपिता नरामरा यन स तादृशोऽपि नास्ति ॥ ४ ॥

वि०—ते हि गर्हणीयैः पूर्वाजनेभ्योऽप्यतिप्रपन्नैः स्वसुतारिरंसाऋषियोपिदुपलालनप्रमथशिरश्छेदगोवधप्रमृतिभिश्चरितैः प्रकम्पितमहाजना अहह ! महदकृत्यमादसमित्थमिति शखाप्यसीकृतसन्निहितजगद्वया एव पुनर्नीवनिमचरिताः । तथा ते हि तथाविधापराधमयुक्तदुर्धरकोपमारब्धमपमानविषमः सुरनरादीन् कदाचित्ता

पवधादिभिर्विडम्बयन्ति कदाचिच्च शिर.कमलोपनयनतीव्रतपः-प्रणिधानादिभिःप्रसन्न मनसस्तानेव वरप्रदानादिप्रसादैरनुगृह्य भूयो विडम्बयन्ति । त्व तु न तथा ॥ ४ ॥

तथा—

**न जगज्जननस्थेमविनाशाविहितादरः ।**
**न लास्यहास्यगीतादिविप्लवोपप्लुतस्थितिः ॥५॥**

**हे नाथ ! अन्य देवोनी जेम जगतने उत्पन्न करवामां, स्थिर करवामां के विनाश करवामां आपे आदर बताव्यो नथी; तेमज नट-विटने उचित नृत्य, हास्य अने गीतादि चेष्टाओवडे आपे आपनी स्थितिने उपद्रववाळी करी नथी. ( ५ )**

अव० न जग०—जगतो जननपालनविनाशनकृतोद्यमस्त्वं नासि। लास्यं-नृत्तं, हास्यं-हसनं, गीतं-स्मरोद्दीपकाः शब्दरचनाविशेषास्तदादयो ये विप्लवाः नटविटोचिता विलासास्तैरुपप्लुतोपद्रुता स्थितिर्मुद्रा यस्य स ईदृशोऽपि नासि॥५॥

वि०—ते ह्यस्य जगतश्चराचरस्यापि जनने स्थेमनि विनाशे च विहितादरा, किल कश्चिज्जगन्ति सृजत्यपरः परिपालयत्यन्यो विनाशयतीति, त्वं तु तत्राप्युदासीन एव । तथा ते हि लास्यहास्यगीतादिभिर्नृत्यहसितगेयप्रभृतिभिर्विप्लवैर्नटविटोचितैश्चेष्टितैरुपप्लुतस्थितय. । त्व पुन परप्रस्तुतेष्वप्यमीषु विलोकनेऽपि तन्द्रालुरिव ॥५॥

तदेव सर्वदेवेभ्यः, सर्वथा त्व विलक्षण ।
देवत्वेन प्रतिष्ठाप्य , कथ नाम परीक्षकैः ? ॥६॥

ते कारणथी हे भगवन् ! ए रीते आप सर्व देवोथी सर्व प्रकारे विलक्षण–विपरीत लक्षणवाळा छो, तेथी परीक्षक लोकोए आपने देव तरीके केवी रीते स्थापन करवा ? ( ६ )

अव० तदे०—हे वीतराग ! तत्तस्मात्कारणात् ब्रह्मा चतुर्वक्त्रो हंसयानो जपमालाकरो गायित्री(गायत्री)सावित्री श्लिष्टो रम्भादिदर्शनार्थकृतपञ्चमुखो जगज्जनकः १ । विष्णु र्गरुडस्थश्चतुर्भुजशङ्खचक्रादिकरो लक्ष्म्यालिङ्गितो रुक्मिणीहरो दैत्यघ्नो वृन्दावन कृतक्रीडो गोपस्त्रीलम्पटः जगत्पालकः २ । हरो हास्य लास्यकरो वृषवाहनो ब्रह्मशिरश्छिदपार्श्वस्थभवानीकस्त्रिनेत्रो जगत्संहारकः ३ । इत्येवंप्रकारेण सर्वलौकिकदेवेभ्यः सर्वथा सर्वप्रकारैर्विलक्षणो विसदृशस्त्व देवत्वेन इदि त्वतया नाम इति कोमलामन्त्रणे परीक्षकैः–प्रेक्षावद्भिः कथं केन लक्षणेन प्रतिष्ठाप्यः–स्थाप्यः ? ॥ ६ ॥

वि०—तस्मात् कारणात् हे भगवन् ! एव पूर्वोक्तप्रकारेण सर्वेभ्योऽपि हरिहरादिदेवेभ्य सर्वथा सर्वैरपि चिह्नैस्त्व विलक्षणो विसदृश । एव च सति परीक्षकैर्देवत्वेन 'देवोऽयम्' इतिबुद्ध्या कथं प्रतिष्ठाप्य ? केन प्रकारेण हृदि व्यवस्थाप्य ? इति ॥ ६ ॥

एतदेव दृष्टान्तेन स्पष्टयति—

**अनुश्रोतः सरत्पर्णतृणकाष्ठादि युक्तिमत् ।**
**प्रतिश्रोतःश्रयद्वस्तु, कया युक्त्या प्रतीयताम्?॥७॥**

हे नाथ! पर्ण–पांदडा, तृण–घास अने काष्ठादि अन्य वस्तुओ पाणीना प्रवाहने अनुकूल चाले ते वात युक्तिवाळी छे, किन्तु प्रवाहने प्रतिकूल चाले; ए वात कयी युक्तिवडे निश्चित करवी ? ( ७ )

एतद्दृष्टान्तमाह—

अव० अनु०—हे वीतराग ! पर्णतृणकाष्ठादि वस्तु अनुश्रोतोजलप्रवाहप्रसरणाऽन्वना सरत्-संचरत् युक्तिमत् युक्तम्। सर्वत्र तथा दृष्टत्वात् । परं प्रतिश्रोतःप्रवाहसंमुखं श्रयच्चट-द्वस्तु पर्णादि कया युक्त्या केन प्रकारेण लोकैः प्रतीयतां-प्रतिपद्यताम् ?, तथा क्वाप्यदृष्टत्वात् ॥ ७ ॥

वि०—अनुश्रोतः सलिलप्रवाहानुसारेण सरत्सचरत् पर्णतृ-णकाष्ठादिवस्तु युक्तिमत् प्रत्यक्षप्रमाणप्रतिष्ठितत्वेन सर्वस्याप्यनुभव-सिद्धत्वेन च यौक्तिकम्, प्रतिश्रोत' सलिलप्रवाहात् प्रतीप तु पर्णतृणादिवस्तु श्रयत्प्रवहत् कया युक्त्या–केन प्रमाणबलेन प्रती-यता–निश्चीयताम् [१] । एव वर्त्तमानदेवलक्षणविलक्षणे त्वयि कथं देवत्वबुद्धिरुपजायतामिति ॥ ७ ॥

एव स्तुतिकृदसविदान इव भगवत्स्वरूप वहिर्मुखपरीक्षक-

---

१ 'सलिलप्रवाह प्रति प्रस्तारेण' इति पत्रान्तरे ।

पक्षकक्षीकारेण किमपि परुषमाग्रममिधाय भूय स्वमाबोधि- व्यमक्ति—

अथवाऽल मन्दबुद्धिपरीक्षकपरीक्षणैः ।
ममापि कृतमेतेन, वैयात्येन जगत्प्रभो ! ॥८॥

अथवा हे जगत्प्रभु ! मन्द–बुद्धिवाळा परीक्षकनी परीक्षाओवडे सर्यु, तेमज मारं पण आ जातिना परीक्षा करवाना वैयावृत्य–हठाग्रहवडे सर्यु (८)

अव० अथ०—हे वीतराग ! अथवाऽल्पमतयो ये परीक्षकास्तेषां परीक्षणैरविचारणैरलं सृतम् । हे जगत्प्रभो ! ममाप्येतेन वैयात्येन स्वपरीक्षाधाष्टर्येन–कृत–पर्याप्तम् ॥ ८॥

वि०—अथवेति पूर्वोपक्षिप्तार्थोपसंहारे । हे जगद्गुरो ! भुवनमहनीय ! अमीभिः पूर्वोदितैर्मन्दबुद्धिपरीक्षकपरीक्षणैर्निर्विचा- रविचारकविचारप्रकारैरलं–पर्याप्तम् सर्वथैव तेष्वनुपपन्नत्वात् तेषाम् । तथा ममाप्येतेन पूर्वोदितेन मादृशजनोचितेन वैयात्येन परीक्षावैदग्ध्यधाष्टर्येन कृतं–पर्याप्तम्, मनसाप्येवमसत्यकल्पस्य त्वयि चिन्तयितुमनुचितत्वात् ॥ ८ ॥

ननु यदि पूर्वोदितानि देवलक्षणानि न तथा लोकक्षमाणि तत् किमन्यत् तदुपलक्षणाय लक्षणान्तरं युक्तमित्याह—

यदेव सर्वसंसारिजन्तुरूपविलक्षणम् ।
परीक्ष्यन्तां कृतधियस्तदेव तव लक्षणम् ॥ ९ ॥

---

१ गुरो ! २ क्ष ।

**हे स्वामिन् ! सर्व संसारी जीवोना स्वरूपथी जे कांई विलक्षण स्वरूप आ जगतमां प्रतीत थाय, ते ज आपनुं लक्षण छे, एम बुद्धिमान पुरुषो परीक्षा करो. ( ९ )**

अव० यदे०—हे वीतराग ! सर्वे संसारिणो ये जन्तवो जीवास्तेषां रूपं स्वरूपं तस्माद्विलक्षणं विसदृशं यदेव यत्किञ्चित्, कृतधियो विद्वांसः परीक्षन्तां-विचारयन्तां तदेव तव लक्षणं देवत्वाभिज्ञानमस्तु ॥ ९ ॥

वि०—हे स्वामिन् ! यदेव सर्वसंसारिजन्तुरूपेभ्य' समग्रभवस्थशरीरशरीरेभ्यो लोकोत्तरत्वेन विसदृशम्, कृतधियो विद्वासस्तदेव तव लक्षण परीक्षन्ताम्। विमुक्त भवति [?], किल यानि परे पक्षिपशुवाहनादीनि देवचिह्नत्वेनोदीर्यन्ते तानि सर्वससारिजन्तुसाधारणानि, असाधारणगुणैश्च देवत्वमुपपद्यते । अत एव भगवान् विमुक्तसर्वसङ्गत्वेन न पक्षिपशुप्रभृतिष्वासीनदेहस्तत एव मुक्तः । वाहनाधीनतनवस्तु सपरिग्रहत्वेन ससारिण एव । तथा सर्वोत्तमसमचतुरस्रसस्थान एव भगवान्, न तु नेत्रादिविकृतिमान्, प्रोषितद्वेषत्वेन च शूलादिशस्त्ररहित., विगतरागत्वेन च नाङ्गनालिङ्गिततनु, अगर्हणीयचरितत्वेन च विश्वविश्वानन्ददायी, परमसमभावभावितत्वेन च प्रकोपप्रसादादिभिर्न विडम्बित', निष्ठितार्थत्वेन च न जगत्सर्गादिव्यग्रः, निर्मोहत्वेन च न लास्यहास्यादिभिरुपप्लुत । पूर्वोदितस्वरूपाश्च परे । एव विधं च यदिदं—'समस्तससारिरूपविलक्षणत्व' तदेव तव लक्षणमिति ॥९॥

एतदेव स्पष्टयन्नुपसंहरति–

**क्रोधलोभभयाक्रान्तं, जगदस्माद्विलक्षणः ।**
**न गोचरो मृदुधियां, वीतराग ! कथञ्चन ॥१०॥**

हे वीतराग ! आ जगत क्रोध, लोभ अने भय थी आक्रान्त–व्याप्त छे, ज्यारे आप क्रोधादिथी रहित होवाना कारणे विलक्षण छो; तथी मृदु–कोमल–मंद बुद्धिवाळा बहिर्मुख पुरुषोने आप कोई पण प्रकारे गोचर–प्रत्यक्ष थई शकता नथी ( १० )

अव० क्रोध०—हे वीतराग ! इदं जगत् सुरासुरनररूपं क्रोधलोभभयोपद्रुतमस्ति तेनास्मज्जगतो विसदृशस्त्वं कथञ्चन केनापि प्रकारेण मृदुधियां जिनशासनबहिर्मुखानां न गोचरोऽसि परोक्षोऽसीत्यर्थः ॥ १० ॥

इति अष्टादशप्रकाशस्यावचूर्णिः ।

वि०—क्रोधलोभभयादिभिः प्रतीतैरान्तरारातिभिरिदं जगदाक्रान्तम् । भगवांस्त्वस्माज्जगतः क्रोधादिभिरनाक्रान्तत्वेनैव विलक्षण –विसदृशः । अत एव वीतरागत्वेनैव कथञ्चन केनाप्युपायेन मृदुधियां कोमलप्रज्ञानां बहिर्मुखानामगोचरः, तदनुयायिभिरन्तर्मुखैरेव तस्योपलम्भसत्वादिति ॥ १० ॥

इति श्रीवीतरागस्तोत्रे अष्टादशस्य कठोरोक्तिस्तवस्य पद्ययोजना ।

- एवं जगद्विलक्षणैरुपलक्षितोऽपि भगवान् यदाराधनेन स्वाराधितो भवति तां भगवदाज्ञामाज्ञास्तवेन स्तुतिकृत् प्रस्तौति, तस्य चायमाद्यश्लोक —

**तव चेतसि वर्तेऽहमिति वार्त्तापि दुर्लभा ।**
**मच्चित्ते वर्त्तसे चेत्त्वमलमन्येन केनचित् ॥१॥**

**हे नाथ ! लोकोत्तर चरित्रवाळा आपना चित्तने विषे हुं रहुं ए तो असंभवित छे, परन्तु मा'रा चित्तने विषे आप रहो, ए बनवाजोग छे अने जो एम बने तो, मारे बीजा कोई मनोरथ करवानी जरूर ज रहेती नथी ! ( १ )**

कठोरं विज्ञप्यात्मनो(न) आज्ञादृढता ज्ञापयन्ति ।

अव० तव०—हे वीतराग ! तव चेतसि चित्तेऽहं वर्त्ते-वसामीति वार्त्तापि दुर्लभा अपर तु दूरे, तव केवलित्वेन चित्ताभावात् मम च तादृगद्भुतगुणाभावात् । मम चित्ते यदि त्वं वर्त्तसे स्थिरीभवसि, (तदा) अन्येन केनचित्प्रसाद-प्रभुताप्रदानादिनाऽलं-सृतम् ॥ १ ॥

वि०—हे विश्वजनीन ! किल भृत्यो हि निष्कृत्रिमभक्तिक्रमेण सङ्क्रामत्येव स्वामिनश्चेतसीति लोकस्थिति त्वयि तु लोकोत्तरचरिते दुर्घटमिदमित्याह—तव सबन्धिनि विगतरागे चेतसि यदहं वर्त्ते–निवसामि इत्येवरूपा वार्त्तापि दुर्लभा–दुष्प्रापैव, केवलं

मद्यामते मच्चित्ते चेयदि त्वं वर्तसे निरन्तरमधिवससि तदा ममान्येन त्वच्चेतसि स्वनिवससमाविना केनचिन्ममोरथेनाप्यलं–पर्याप्तम्। मच्चित्ते त्वन्निवाससमाश्रयेणैव कृतकृत्योऽहमिति भावः ॥ १ ॥

किमर्थमिममेव चरिताथ इति चेदाह—

**निगृह्य कोपत काँश्चित्तुष्ट्याऽनुगृह्य च ।**
**प्रतार्यन्ते मृदुधियः, प्रलम्भनपरै परै ॥ २ ॥**

हे नाथ ! ठगवामां तत्पर एवा अन्य देवो, मुग्ध बुद्धिवाळा केटलाकने कोपथी–शापादि आप वाथी अने केटलाकने प्रसादथी–वरदानादि आप वाथी ठगे छे परन्तु आप जेमा चित्तमां रह्या हो, ते मनुष्यो तेवा कुदेवोथी कदी ठगाता नथी, अने तेथी करीने आप मारा चित्तमां रहो, तो हुं पण ठगाउ नहि अने कृतकृत्य थउं ( २ )

अव॰ निगृ॰—हे वीतराग ! परैर्वञ्चनतत्परैर्हरिरादिभिः कांश्चिदात्मप्रतिकूलान् दैत्यान् कोपतो निगृह्य, कांश्चिदनुकूलान् भक्तान् तुष्ट्या प्रसादेनानुगृह्य–संतोष्य मृदुधियो मुग्धधियः प्रतार्यन्ते–वञ्चयन्ते त्वत्पवित्रितधियो मदीयादृशान्विना ॥ २ ॥

वि॰ मत कारणात् हे स्वामिन् ! अमी त्वच्छून्यमनसो मृदुधियः परैरवीतरागदेवैः प्रतार्यन्ते–विप्रलभ्यन्ते । कथमित्याह–

---

१ त्वच्चित्त' इति प्रत्यन्तरे ।

तत्समक्ष काश्चिदात्मप्रतिकूलान् कोपत क्रोधोद्बोधात् शापवधादिभिर्निगृह्य । तथा काश्चिदात्मनोऽनुकूलांस्तुष्ट्या प्रसादेन वरादिप्रदानादनुगृह्य। किं विशिष्टैः परैः?, प्रलम्भनपरैः—वञ्चनप्रपञ्चचतुरैः। किमुक्तं भवति ?, किल मृदुधियो ह्यायतिमनालोच्य तात्कालिकीं तेषा निग्रहानुग्रहशक्तिमनुचिन्त्य भीत्या प्रीत्या च तदनुवर्त्तनपरा. पतन्त्येवागाधे संसृतिपाथोधौ, त्वया च विश्ववत्सलेनालङ्कृते चेतसि न प्रभवति तेषा प्रतारणेति त्वयि चित्तवासिनि कृतकृत्य एवाहम् ॥२॥

ननु यद्येकान्ततो वीतराग एवायं भवदाप्तस्तदा निरन्तरप्रयुक्तैरपि स्तुतिस्तोमैर्न प्रसादभाग्भविष्यति । यदि च स्तुतितोषा(स्तोमा)त् प्रसीदति तदा नियत न वीतरागः, अप्रसन्नश्च कीदृक्फल दास्यतीति गलतालुशोषफल एवायं स्तुतिवादस्तस्मिन् भवतामिति प्रलापिन. परान् प्राह—

**अप्रसन्नात्कथं प्राप्यं, फलमेतदसङ्गतम् ? ।**
**चिन्तामण्यादयः किं न, फलन्त्यपि विचेतनाः?॥३॥**

**हे नाथ ! कदी पण प्रसन्न नहिं थनारा एवा आपनी पासेथी फळ केवी रीते मेळववुं ?, एम कहेवुं ए असंगत छे; कारण के चिंतामणिरत्नादि विशिष्ट चेतना रहित होवा छतां शुं फलिभूत थतां नथी ?, अवश्य थाय छे. ( विशिष्ट चेतना रहित चिंतामणि आदि पोते कोईना उपर प्रसन्न नथी**

यता छतां, विधिपूर्वक तेमनी आराधना करनारने फळ प्राप्त थाय छे ते ज प्रमाणे वीतराग-परमात्मानी विधिपूर्वक आराधना करनारने अवश्य फळ प्राप्त थाय छे ) ( ३ )

अव० अथ०—रागद्वेषाभावेनाप्रसन्नाद्वीतरागात्कथं फलं मोक्षादि प्राप्यम् ?, यतः सुप्रसन्न एव प्रभुः फलं दद्यात्, प्रसत्तिश्च रागलक्षणम्, हे वीतराग ! एतत्परेषां वचः असङ्गतमनुचितम्। यतश्चिन्तामणिकामघटादयो विचेतना अपि विशेषचैतन्यरहितत्वेनाप्रसन्ना अपि विधिवदाराधिताः किं न फलन्ति ?, अपि तु फलन्त्येव। एवं वीतरागोऽपि फलदः ॥३॥

वि०–हे विद्वन्मानिन ! यदेतद्भवद्भिरुच्यते यत्–अप्रसन्नाद्वीतरागत्वेनैव स्तुतिस्तैरप्यप्रसन्नात् भवद्भिः कथमीप्सितं फलं प्राप्य–लभ्यमिति ? तदसङ्गतम् तदिदं भवदुदीरितं वचः सर्वथैवासङ्गतमयौक्तिकम्। किमित्याह–न खल्वयं नियमो यत्प्रसन्न एव सेव्यः सेवाफलं ददातीति दृष्टान्तेन विघटयति–चिन्तेत्यादि, लोके हि ये किल चिन्तामणिमहौषधिममृतप्रमुखविशेषविद्भिः केनाप्य विधानेन प्रसाध्यन्ते ते विधिवदाराधिताः किं वाञ्छितफलैर्न फलन्ति ? अपि तु फलन्त्येव। किं विशिष्टाः ? विचेतना विशिष्टचैतन्यशून्या अपि प्रसादश्च विशिष्टचैतन्याविनाभूतः। यतश्चिन्तामण्यादीनां चैतन्यविशेषशून्यानामप्याराधनं यदि न निष्फलं तदा कस्मात् वीतरागस्यापि विज्ञानरागोर्भगवत समाराधनं कथमिव फलमिति परिकल्पितम् ॥ ३ ॥

न चास्य भगवत. प्रसादनोपायोऽपि कोमलधियामधीनः। यस्य (यस्मात्) न खल्वय देवान्तरादिवत्पूजाप्रणामस्तुतिप्रभृतिभि. प्रसीदति, किन्त्वाज्ञाराधनेन । सैव च पूजादिभ्य' सविशेषफलवतीति दर्शयन्नाह—

**वीतराग ! सपर्यायास्तवाज्ञापालनं परम् ।**
**आज्ञाऽऽराद्धा विराद्धा च, शिवाय च भवाय च ॥४॥**

**हे वीतराग ! आपनी पूजा करतां पण आपनी आज्ञानुं पालन श्रेष्ठ छे, कारण के-आराधेली आज्ञा मोक्षने माटे थाय छे, अने विराधेली आज्ञा संसारने माटे थाय छे. (प्रभुनी आज्ञाने ठोकरे मारी केवळ प्रभुनी पूजा करनारने आथी बोधपाठ लेवानो छे.) (४)**

अव० वीत०—हे वीतराग ! तव सपर्यातः सेवात आज्ञाराधनं पर प्रकृष्टफलदं भावस्तवरूपत्वात् । हेतुमाह–यतस्तवाज्ञैवाराद्धाराधिता शिवाय–मोक्षाय, विराद्धा–विराधिता भवाय–संसाराय च स्यात् ॥ ४ ॥

वि०–हे वीतराग ! भगवंस्तव सवन्धिन्याः सपर्यायाः पूजायाः सकाशादाज्ञापालन निदेशकरणं परं प्रकृष्टफलदम्, द्रव्यस्तवरूपत्वात् पूजाया भावस्तवरूपत्वाच्चाज्ञाराधनस्य, तयोश्च पर-

१ 'सपर्यातः' इति प्रत्यन्तरे ।

स्तरं सुमेरुसर्षपयोरिव सुदूरमन्तरम् । उक्तं च "कयपयमसिसोपार्णं भमसहस्ससुसिय सुपण्णतण्हम् । जो कारिज्ज जिणहरं तओवि तवसंजमो अहिओ" त्ति । सपर्यापीति तु पाठे आज्ञापालन तव मुक्त्युत्त्यैव प्रकृष्टतमम्, परं सपर्यापि तदधिकारिणामाज्ञापालनरूपत्वेन परम्परया मुक्तिफलत्वेन च वरैव । किञ्चेयं भगवदाज्ञा आराद्धा त्रिकरणशुद्ध्या सम्यगाराधिता शिवाय–महोदयाय, विराद्धा अज्ञानप्रमादादिभिरपवीरिता भवाय–संसाराय जायते, अतः क इव सहृदयस्तदाराधनेऽप्यौत्सुक्यं विदध्यादिति ॥ ४ ॥

अथ केयमाज्ञा नाम उच्यते—

आकालमियमाज्ञा ते, हेयोपादेयगोचरा ।
आश्रवः सर्वथा हेयः, उपादेयश्च संवरः ॥ ५ ॥

आपनी आ आज्ञा सदा काळ हेयोपादेयपने गोचर विषय करनारी छे अने ते ए छे के–आश्रव ए सर्व प्रकारे हेय=त्याग करवालायक छे अने संवर ए सर्व प्रकारे उपादेय=अंगीकार करवालायक छे (५)

अव० आका०—हे वीतराग ! ते तवाकालसमासंसार मियमाज्ञा शिक्षास्ति । कथम्भूता ?, हेयो० हेयं त्याज्यमुपादेयं ग्राह्यं ते एव द्वे गोचरो विषयो यस्याः सा । तामेव दर्शयति–आश्रव:० आश्रवति आत्मनि अनेन पापमित्याश्रवः कषायविषयप्रमादादिः, स च हेयः । संवरणं सावद्यव्यापारेभ्यो निवर्तन

संवरः सत्यशौचक्षमामार्दवादिरूपादेयः–स्वीकार्यो विवेकिभिः ॥ ५ ॥

वि०—हे भगवन्। आकालमासंसारमतीते वर्त्तमाने भविष्यति च काले ते तव संबन्धिनी इयं वक्ष्यमाणा आज्ञा शासनम्। किंविशिष्टा ?, हेयोपादेयगोचरा हेयविषया उपादेयविषया च। द्वैविध्यमेव व्यनक्ति–आश्रवेत्यादि, आश्रवत्यनेनात्मनि पापमित्याश्रव कषायविषयदुष्टयोगप्रमादाविरतिमिथ्यात्वार्त्तरौद्रलक्षण., स च सर्वथा मनोवाक्कायै करणकारणानुमतिभिश्च हेय –परित्याज्य.। तथा पूर्वोदितस्याश्रवस्य विपक्षरूपः क्षमामार्दवार्जवसन्तोपसंयमगुप्तित्रयाप्रमादविरतिसम्यक्त्वशुभध्यानलक्षण. संवर उपादेयः सर्वात्मना स्वीकार्य इति भगवदाज्ञा ॥ ५ ॥

अथ किमर्थमाश्रवत्यागे संवरोपादाने च इयानाग्रह इत्याह–

**आश्रवो भवहेतुः स्यात्, संवरो मोक्षकारणम्।**
**इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम् ॥६॥**

**आश्रव ए भवनो हेतु छे अने संवर ए मोक्षनुं कारण छे. श्रीअरिहंत देवोना उपदेशनुं आ संक्षिप्त रहस्य छे, अने बीजो सर्व एनो विस्तार छे. ( ६ )**

अव० आश्र०—आश्रवः संसारकारणं स्यात्। संवरो मुक्तिनिमित्तं स्यात्। इतीयमार्हती अर्हत्संबन्धिनी मुष्टिः समस्तोपदेशसारसंग्रहरूपा मूलग्रन्थिर्वर्त्तते। यच्चान्यदङ्गोपाङ्गा-

दिरूप दरीदृश्यते तदरूपा भगवदाज्ञायाः प्रपञ्चनं विस्तारणमेव विज्ञेयम् ॥ ६ ॥

वि०—मतः कारणात्वममाश्रव पूर्वोदितो भवहेतु संसारकारणम्, कषायादिकलुषित एवात्मा भवं प्राप्नोतीति हेय । संवरश्च पूर्वोदितस्वरूपो मोक्षस्यापुनर्भवस्य कारणं हेतुः, सर्वसंवररूपस्त्वात्मद्रोऽवमस्येत्युपादेयः । इतीयमेवरूपा आर्हती–अर्हतां संबन्धिनी मुष्टि समस्तोपदेशार्थसार्थसारसङ्ग्रहरूपा मूलमन्त्रिः । अस्मात्पद ज्ञोपाङ्गमूलच्छेदमन्यादिरूपं उदस्या आश्रवस्यागसंवरादानरूपाया भगवदाज्ञाया सर्व प्रपञ्चन विस्तारणमेव ॥ ६ ॥

पुनर्भगवदाज्ञाया एव प्रभावमुद्भावयन्नाह–

इत्याज्ञाराधनपरा, अनन्ताः परिनिर्वृत्ता ।
निर्वान्ति चान्ये क्वचन, निर्वास्यन्ति तथाऽपरे ॥७॥

ए रीतनी आज्ञानु आराधन करवामां तत्पर एवा अनंत आत्माओ निर्वाणने पाम्या छ, बीजा केटलाक कोई ठेकाणे पामे छे, अने बीजा अनंता भविष्यमां पामशे ( ७ )

अव० इत्या०—इति आश्रव सर्वथा हेय इत्यादिरूपा या त्वदाज्ञा तदाराधनोद्यता अनन्ता जीवाः परिनिर्वृताः प्राक्काले मोक्षं गताः । अन्ये क्वचन महाविदेहादौ निर्वान्ति

**सम्प्रति मोक्षमाप्नुवन्ति । तथाऽपरे जीवा निर्वास्यन्ति आगामिकाले मोक्षं यास्यन्ति ॥ ७ ॥**

वि०-हे स्वामिन्! इत्येवरूपायास्त्वदाज्ञाया: पालने सम्यगासेवने परास्तत्पराः । अतीते काले अनन्ता भव्याङ्गभाजः परिसामस्त्येन सकलकर्मजालोन्मूलनपुरस्सरं निर्वृता निर्वृतिसुखभाजनतामयु: । तथा वर्त्तमानेऽपि काले ये केचन निर्वान्ति तेऽप्याज्ञापालनात् । तथा भविष्यति समये परेऽपि ये केचिन्निर्वास्यन्ति तेऽपि त्वदाज्ञापालनात् । तदेव सर्वथा सर्वज्ञाज्ञैव परमपदसुखानामविकलकारणमिति ॥ ७ ॥

एवं च सति यन्निश्चित तदाह-

**हित्वा प्रसादनादैन्यमेकयैव त्वदाज्ञया ।**
**सर्वथैव विमुच्यन्ते, जन्मिनः कर्मपञ्जरात् ॥८॥**

**हे विश्वेश ! जगतमां एम कहेवाय छे के स्वामिनी प्रसन्नता होय तो फळनी प्राप्ति थाय छे, परंतु ए वात चिन्तामणिना दृष्टान्तथी असंगत छे. आ ज प्रकाशना त्रीजा श्लोकमां ए सिद्ध करी बताव्युं छे, माटे प्रसन्नता लक्षण दीनतानो त्याग करीने निष्कपटपणे आपनी आज्ञानुं आराधन करवावडे भव्य प्राणीओ कर्मरूपी पांजरामांथी सर्वथा मुक्त बने छे.**

१६

ए कारणे आपनी आज्ञानी आराधना करवी एज एक मुक्तिनो श्रेष्ठ उपाय छे (८)

अव० हित्वा०—हे वीतराग ! प्रसादनायै प्रसत्ति-विषये यद्दैन्यं चाटु तद् हित्वा त्यक्त्वा एकयैव एकाकिन्यैव त्वदाज्ञया जन्मिनो जीवा कर्मपञ्जरात्कर्मरूपकाष्ठपञ्जरात् सर्वथैव निःशङ्कतया विमुच्यन्ते मुक्ता भवन्तीत्यर्थः॥८॥

इत्येकोनविंशतितमप्रकाशस्यावचूर्णि ।

वि०—हे विभो ! परैरपरमार्थवेदिभिः क्लिश्यमानैर्यत्-प्रसादादेव प्रभो फलं सुलभम्, तच्च चिन्तामण्यादिदृष्टान्तेन पुरैव विघटितम्, तस्मादिव परोपन्यस्त प्रसादनात्मकार्पणं दैन्यं-दीनत्वम्, हित्वा-विहाय, एकया निश्चलसमाराधितया त्वदाज्ञया तव शासनेन सर्वथा अपुनर्भावेन जन्मिनो भव्यात्मानः कर्मपञ्जराद्विमुच्यन्ते सकलकर्मबन्धविध्वंसेन सदानन्दं परमभिभवन्ति । तस्मात्सर्वथा त्वदाज्ञाराधनातत्परैः परमपदोपायपरिशीलनैरिति ॥८॥

इति श्रीवीतरागस्तोत्रे एकोनविंशस्याज्ञास्तवस्य व्याख्या ।



एवं स्तुतिकृद्भगवति वीतरागे विविधभक्तिभरभासुरभाषितैः स्तुतिमभिधाय साम्प्रतं तदुपसंहाराय समाधिमयमस्य याच्ञास्तवं चिकीर्षुः साक्षादिव पुरः स्फुरन्तमिव स्वामिनमुद्दिश्य भक्त्यतिशयेनाह-

पादपीठलुठन्मूर्ध्नि, मयि पादरजस्तव ।
चिरं निवसतां पुण्यपरमाणुकणोपमम् ॥ १ ॥

**आपना पादपीठमां मस्तकने नमावतां मारा ललाटने विषे पुण्यना परमाणुना कणीया समान आपना चरणनी रज चिरंकाल रहो. ( १ )**

त्रिविधैः प्रकारैः प्रभुं प्रसाद्य मनोभिप्रेतं प्रार्थयन्ति–

**अव० पाद०**—हे वीतराग! पदामनलुठन्मस्तके मयि 'गङ्गाया घोषः' इति वल्लक्षणया ललाटे तव पादरजश्चिरमासंसार निविशता–स्थिरीभवतु। रजः कथम्भूतम्?, पुण्यपरमाणुक० पुण्यस्य ये परमाणवः पुद्गलास्तेषा ये कणास्तदुपमं तत्सदृशम्। कोऽर्थः?, येषा भक्त्या भूलग्ने शिरसि प्रभुपादग्ररजोविश्रान्तं तैः पुण्यं प्राप्तमेव ॥ १ ॥

वि०—हे विश्ववन्द्य! तव पादारविन्दरजो मयि विशेषणसामर्थ्यान्मम मूर्ध्नि चिरमाससारं निवसता–निलीयताम्, किं विशिष्टे? पादपीठलुठन्मूर्ध्नि, प्रस्तावात्त्वत्सवन्धिनि पादपीठे चलननलिनसस्पर्शपावने अह्निविष्टरे[1] लुठद् भक्त्यतिशयेन विलुलन्मूर्द्धानि[2] यस्य स तथा तस्मिन्, रज. किंविशिष्ट?, पुण्यपरमाणुकणोपमम्, पौद्गलिकत्वात् कर्मणा पुण्यप्रकृतिबन्धहेतवो ये परमाणुकणास्तदुपमं तत्तुल्यम्। इदमुक्त भवति–येषा हि भक्तिप्रणते शिरसि स्वामिन पादरजो विश्रान्त ते प्राय. पुण्यकर्मनिबन्धका एवेति ॥१॥

तथा—

---

१ 'पावनैरह्निविष्टरै.' इति प्रत्यन्तरे। २ 'विलुठन्' इति प्रत्यन्तरे।

ए कारणे आपनी आज्ञानी आराधना करवी एज एक मुक्तिनो श्रेष्ठ उपाय छे (८)

अव० हित्वा०—हे वीतराग! प्रसादनार्थे प्रसन्नता विषये दैन्य चाटु च हित्वा त्यक्त्वा एकयैव एकाकिन्यैव त्वदाज्ञया अमिनो जीवा कर्मपञ्जरात्कर्मरूपकाष्ठपञ्जरात् सर्वथैव निःशङ्कतया विमुच्यन्त मुक्ता भवन्तीत्यर्थः॥८॥

इत्येकोनविंशतितमप्रकाशस्यावचूर्णि ।

वि०—हे विश्वेश ! परैरपरमार्थवेदिभिः किमेतद्युक्तीवर्तते यत् प्रसन्नादेव प्रभो फलं सुलभम्, तच्च चिन्तामण्यादिदृष्टान्तेन पुरैव विघटितम् तस्मादिदं परोपन्यस्त प्रसादनाय दैन्यं–चाटुत्वम् हित्वा–विहाय एकया निश्चयसमाराधितया त्वदाज्ञया तव शासनेन सर्वथा अपुनर्भावाय जन्मिनो भव्यात्मानः कर्मपञ्जरा द्विमुच्यन्ते सकलकर्मबन्धनविध्वंसेन सदानन्द परमधिश्रयन्ति । तस्मात्परमार्थ त्वदाज्ञाराधनादपरैः परमपदोपायपरिदृष्टिर्मैरिति ॥ ८ ॥

इति श्रीवीतरागस्तोत्रे एकोनविंशस्याज्ञास्तवस्य पद्ययोजना ।



एवं स्तुतिकुसुमभगवति वीतरागे विविधभक्तिभङ्गीसरङ्गितो स्तुतिमभिधाय साम्प्रतं तदुपसंहारस्य समाप्तिमङ्गलाय चाशीःस्तवं विभणिषुः साक्षात्पुरः स्फुरन्तमिव स्वामिनमुद्दिश्य भक्त्यतिशयेनाह–

पादपीठलुठन्मूर्ध्नि, मयि पादरजस्तव ।
चिरं निवसतां पुण्यपरमाणुकणोपमम् ॥ १ ॥

हे प्रभु ! उपासना माटे अयोग्य एवा हरिहरादिने प्रणाम करवावाळा अने त्रण जगतने सेव्य एवा आपनी उपासनावडे वंचित रहेवाथी करुणास्पद बनेला, मारा आ ललाटने आपनी आगळ आळोटाववाथी-नमाववाथी तेना उपर पडेली क्षतनी श्रेणिज प्रायश्चित्तरूप थाओ. ( ३ )

अव० त्वत्पु०—हे वीतराग ! मम ललाटस्य तपस्विनः पूर्वं त्वत्प्रणामवञ्चितत्वेन कृपास्पदस्य, कृतोऽसेव्यानां प्रणामो येन स तस्य तवाग्रे नमनैः किणावलिश्चिह्नपङ्क्तिः प्रायश्चित्तं निष्पापहेतुर्भूयाद्भवतु ॥ ३ ॥

वि०—हे परमेष्ठिपुरस्सर ! त्वत्पुरस्तव पुरो भागे, लुठनैर्भक्त्यतिशयादसकृदवनीतलतालनैर्मद्भालस्य मत्सबन्धिनो ललाटपट्टस्य तपस्विन' पूर्वं त्वत्प्रणामवञ्चितत्वेन कृपास्पदस्य, किणावलि क्षितिपीठघट्टनोद्भूता क्षतततिः प्रायश्चित्तमघमर्षण भूयात् । ननु कस्य पापस्य प्रायश्चित्तमिदमित्याह-कृतासेव्यप्रणामस्य, किं विशिष्टस्य मद्भालस्य [१] कृतो निर्वर्तितोऽसेव्याना भवाभिनन्दित्वेनोपासनानर्हाणां प्रणाम प्रणतिर्येन स तथा तस्य, यश्चापराध्यति स ध्रुवमनुभवत्येवापराधफलमिति ॥ ३ ॥

अन्यच्च—

---

१ 'द्रुतम्' इति प्रत्यन्तरे ।

मदृशौ त्वन्मुखासक्ते, हर्षबाष्पजलोर्मिभिः ।
अप्रेक्ष्यप्रेक्षणोद्भूतं, क्षणात्क्षालयतां मलम् ॥२॥

आपना मुखमां आसक्त थयेलां मारां नेत्रो पूर्वे अप्रेक्ष्य वस्तुओने जोवाथी उत्पन्न थयेला पाप मलने क्षणवारमां हर्षाश्रुना जलनी ऊर्मिओ-तरंगो वडे धोइ नांखो (२)

अव० मदृश०—हे वीतराग मम नयने त्वद्वदननि रीक्षके, अप्रेक्ष्याणि प्रेक्षितुमयोग्यानि परस्त्रीकुदेवादीनि तेषां प्रेक्षणेन निभालनेन जातं मल-पापं हर्षाश्रुजलकल्लोलैः क्षणात्क्षालयतामपनयताम् ॥ २ ॥

वि०—हे विवेकदर्पण ! मदृशौ मत्संबन्धिनी लोचने, त्वन्मुखासक्ते त्वदाननकमलनिलीने, हर्षबाष्पजलोर्मिभिरानन्दाश्रुवारिवीचिभिरप्रेक्ष्याणां रागद्वेषमोहादिहेतुत्वेन विलोकयितुमनुचितानां मदकामादाकृत्या वा प्रेक्षणमवलोकनं तस्मादुद्भूतमुत्पन्नं यन्मलं कल्मषं तत् क्षणादल्पकालात् क्षालयतां-विशोधयताम् । समुचितं च जलोर्मिभिर्मलक्षालनं भगवद्वदनावलोकनात चिरसंचितपापपटलविगलनमिति ॥ २ ॥

किंच—

त्वत्पुरो लुठनैर्भूयान्मद्भालस्य तपस्विनः ।
कृतासेव्यप्रणामस्य, प्रायश्चित्तं किणावलिः ॥३॥

**हे प्रभु ! उपासना माटे अयोग्य एवा हरिहरादिने प्रणाम करवावाळा अने त्रण जगतने सेव्य एवा आपनी उपासनावडे वंचित रहेवाथी करुणास्पद बनेला, मारा आ ललाटने आपनी आगळ आळोटाववाथी-नमाववाथी तेना उपर पडेली क्षतनी श्रेणिज प्रायश्चित्तरूप थाओ. ( ३ )**

अव० त्वत्पु०—हे वीतराग ! मम ललाटस्य तपस्विनः पूर्वं त्वत्प्रणामवञ्चितत्वेन कृपास्पदस्य, कृतोऽसेव्यानां प्रणामो येन स तस्य तवाग्रे नमनैः किणावलिश्चिह्नपङ्क्तिः प्रायश्चित्तं निष्पापहेतुर्भूयाद्भवतु ॥ ३ ॥

वि०—हे परमेष्ठिपुरस्सर ! त्वत्पुरस्तव पुरो भागे, लुठनैर्भक्त्यतिशयादसकृदवनीतलतालनैर्मद्भालस्य मत्सवन्धिनो ललाटपट्टस्य तपस्विनः पूर्वं त्वत्प्रणामवञ्चितत्वेन कृपास्पदस्य, किणावलि. क्षितिपीठघट्टनोद्भूता क्षततति. प्रायश्चित्तमघमर्षण भूयात् । ननु कस्य पापस्य प्रायश्चित्तमिदमित्याह–कृतासेव्यप्रणामस्य, किं विशिष्टस्य मद्भालस्य [१] कृतो निर्वर्त्तितोऽसेव्याना भवाभिनन्दित्वेनोपासनानर्हाणां प्रणाम प्रणतिर्येन स तथा तस्य, यश्चापराध्यति स ध्रुवमनुभवत्येवापराधफलमिति ॥ ३ ॥

अन्यच्च—

१ 'द्रुतम्' इति प्रत्यन्तरे ।

मम त्वद्दर्शनोद्भूताश्चिर रोमाञ्चकण्टकाः ।
तुदन्तां चिरकालोत्थामसद्दर्शनवासनाम् ॥ ४ ॥

हे निर्ममशिरोमणि ! आपना दर्शनथी मने चिरकाल सुधी उत्पन्न थयेला रोमांचरुपी कंटको दीर्घकालथी उत्पन्न थयेली कुशासनमी दुर्वासनानो अत्यन्त नाश करो ( ४ )

अव० मम०—हे वीतराग ! मम त्वद्दर्शनप्रसवोद्भूता रोमाञ्चकण्टका हर्षोत्कर्षेण चिरं स्थिरा इति गम्यम् । चिर अनन्तभवभ्रमणोपचितां कुशासनदुर्वासनां तुदन्तां-व्यथोत्पादनेन निर्वासयन्ताम् । चिरोपचितो रागश्चिरौषधसेवनेनैव विनश्यतीति स्थितिः ॥ ४ ॥

हे निर्ममशिरोमणे ! मम त्वत्संबन्धि महर्षममनन्यामन्यमि व्यन्तरापि निरीक्षण तस्मादुद्भूता संघटिता ये रोमाञ्चकण्टकाः पुष्कलोरकोद्भेदास्ते चिरकालेरनामनादिभवभ्रमणोपचितामसद्दर्शनानामसर्वज्ञोपज्ञकुशासनानां दुर्वासनां चिरमस्मन्तं तुदन्तां-व्यथोत्पादनेन निर्वासयन्ताम् । समुचितं च कण्टकैर्व्यथन व्यथितस्य च बहिर्निर्याणमिति ॥ ४ ॥

अपरं च—

१ प्रमदो' इति प्रत्यन्तरे ।

**त्वद्वक्त्रकान्तिज्योत्स्नासु, निपीतासु सुधास्विव ।**
**मदीयैर्लोचनाम्भोजैः, प्राप्यतां निर्निमेषता ॥५॥**

हे नाथ! अमृत समान आपना मुखनी कान्ति-रूपी चंद्र ज्योत्स्नानुं पान करवाथी मारा नेत्ररूपी कमळो निर्निमेषताने पामो. ( ५ )

अव० त्वद्वक्त्र०—हे वीतराग! तव वदनेन्दोः कान्तिर्लावणिमा तस्य ज्योत्स्नासु स्पष्टतासु सुधास्विवामृतेष्विव निपीतास्विति 'वर्त्तमानकाले क्तः' निपीयमानासु मत्सम्बन्धिभिर्नयननलिनैर्निर्निमेषता निष्पन्दता निश्चलता प्राप्यतामनुभूयताम् । योग्या ह्यमृतपायिनां निर्निमेषताऽमरत्वमिति । एवं त्वल्लावण्यामृतपायिनोऽन्तरङ्गयोर्ज्ञानदृशोरप्रतिपातित्वं भवत्वित्यप्युक्तिलेशः ॥ ५ ॥

हे जगल्लोचनलोभनवदन ! त्वत्सम्बन्धि यद्वक्त्र मुखपीयूषद्युतिस्तस्य कान्तिर्लावणिमजोत्पीलच्छवि. सैव ज्योत्स्नाश्चन्द्रिकास्तासु नितरा पीतासु तृप्तिपर्यन्तमास्वादितासु, कास्विव [१], सुधास्विव पीयूषपूरेष्विव । मदीयैर्मत्सम्बन्धिभिर्लोचनाम्भोजैर्नयननलिनैर्निर्निमेषता निष्पन्दता प्राप्यतामनुमूयताम् । योग्या च ज्योत्स्नापानादम्भोजाना प्रस्तावादिन्दुविकासिना निष्पन्दता, पीयूषपायिना च निर्निमेषता। अनिमेषत्वममरत्वमिति यावत् ॥ ५ ॥

---

१ 'नीलोत्पले.' इति प्रत्यन्तरे ।

तथा—

स्वदास्यलासिनी नेत्रे, त्वदुपास्तिकरौ करौ ।
त्वद्गुणश्रोतृणी श्रोत्रे, भूयास्तां सर्वदा मम ॥६॥

हे नाथ ! मारां बे नेत्रो आपना मुखने जोवामां सदा लालसावाळां बनो मारा बे हाथ आपनी पूजा करवामां सर्वदा तत्पर बनो, अने मारां बे कान आपना गुणोनु श्रवण करवामां हमेशां उद्युक्त रहो मळेली कायाने सफळ करवानु अमोघ साधन आ श्लोकमां गुरुदेव दर्शावे छे ( ९ )

अव० त्वदा०—हे वीतराग ! मम नेत्रे त्वन्मुख विलोकनसुखलालसे भूयास्ताम्, पाणी त्वत्पूजापरौ, त्व द्गुणश्रवणपरायणौ कर्णौ भूयास्तामिति क्रिया । सर्वदेति क्रिया विशेषणम् ममेति सर्वत्र योज्यानि ॥ ९ ॥

हे विवेकमित्र ! मम संबन्धिनी नेत्रे त्वदास्यलासिनी त्व न्मुखसुखवासमुल्लसिते भूयास्ताम् । तथा मम करौ पाणी अपि त्वदुपास्तिकरौ त्वच्चरणसरोजसपर्यापर्यन्तसिद्धौ स्याताम् । तथा मम श्रोत्रे अपि त्वद्गुणश्रोतृणी त्वदीयाभिरामगुणग्रामश्रवणसावधाने भूयास्ताम् । कथ ! सर्वदा सर्वकालम् यतस्त्वन्मुखमेव समस्त वीक्षणीयोपनिषद्भूतम् त्वमेव च सर्वोपास्यरहस्यसीमा त्वद्गुणाः एव सर्वश्रोतव्यसर्वस्वमाया मान्यदिति भाव ॥ ९ ॥

किञ्च—

**कुण्ठापि यदि सोत्कण्ठा, त्वद्गुणग्रहणं प्रति ।**
**ममैषा भारती तर्हि, स्वस्त्येतस्यै किमन्यया ? ॥७॥**

**हे प्रभु ! कुंठित–अतीक्ष्ण एवी पण मारी आ वाणी आपना गुणोनुं ग्रहण करवा प्रत्ये उत्कंठित होय, तो तेनुं कल्याण थाओ, ते सिवाय अन्य वाणीवडे शुं ? ( ७ )**

अव० कुण्ठा०—हे वीतराग ! मम एषा भारती वाक् कुण्ठापि सर्वत्र स्खलन्त्यपि यदि त्वद्गुणवर्णनं प्रति सोत्कण्ठा स्पृहयालुरस्ति तर्ह्येतस्यै भारत्यै स्वस्ति कल्याणमस्तु । अन्यया त्वद्गुणपराङ्मुखया किं ?, न किञ्चिदित्यर्थः ॥ ७ ॥

वि०—हे भुवनमहनीय ! मम संबन्धिनी एषा स्तुतौ व्याप्रियमाणा भारती वाणी चतुर्दशपूर्वधरदशपूर्वधरादिपूर्वपुरुषसिंहभारत्यपेक्षया सूक्ष्मार्थसार्थभेदनाक्षमत्वेन च कुण्ठाप्यतीक्ष्णापि यदि त्वद्गुणग्रहण प्रति तव गुणोत्कीर्त्तनमनु सोत्कण्ठा सस्पृहा तर्हि तदा एवंविधायै कुण्ठायै अप्येतस्यै मम वाण्यै स्वस्ति कल्याणमस्तु, अन्यया एतद्व्यतिरिक्तया त्वद्गुणग्रहणपराङ्मुखयाऽकुण्ठयापि कुमतप्रवर्त्तनेन स्वपरयोरनर्थफलया भारत्या किं ?, न किञ्चित्, उक्तस्वरूपया स्ववाचैव मे चरितार्थत्वात् ॥ ७ ॥

एवमुत्तरोत्तरभक्तिरागभावितः स्तुतिकृद् भगवति परमात्मनि सर्वात्मनैवात्मानमुपनिनीषुः स्तुतिशेषमाह—

**तव प्रेष्योऽस्मि दासोऽस्मि, सेवकोऽस्म्यस्मि किङ्करः ।**
**ओमिति प्रतिपद्यस्व, नाथ ! नातः परं ब्रुवे ॥ ८ ॥**

हे नाथ ! हुं आपनो प्रेष्य छुं, दास छुं, सेवक छुं, अने किंकर छुं, माटे ' आ मारो छे ' ए प्रमाणे आप स्वीकार करो आथी अधिक हुं कांई कहेतो नथी (८)

अव० तव०—स्वामिना स्वार्थसिद्धय यत्र तत्र प्रेष्यत इति प्रेष्यः, अहं तव प्रेष्योऽस्मि, दासः क्रयक्रीतसिद्धनाथ क्रीतोऽस्मि, सेवकः सम्यक्स्वामिसेवायां निपुणोऽस्मि, तथा किङ्करः समादिशत किङ्करोमीति वचमातुरोऽस्मि । एते हि स्वपरिचर्यानुसारेण फलमिच्छन्ति अतस्त्वमोमित्यक्षरमात्र सुदीर्घ मदीयोऽयमिति मां प्रतिपद्यस्व स्वीकुरु, हे नाथ ! अत स्त्वद्वचनादपरं धनस्वर्णादि न ब्रुवे–न याचे, अनेकार्थत्वा द्धातूनामित्यर्थः ॥ ८ ॥

हे सर्वाङ्गुतसनाथ ! नाथ ! अस्मि अहं तव संबन्धी प्रेष्यः, दास सेवक किङ्करश्चास्मि । तत्र प्रेष्यते प्रभुणा स्वार्थसिद्धये यत्र तत्रेति प्रेष्य । दासश्च क्रयक्रीतोऽहितकादि । सम्यक् स्वामि चित्तानुरूपसेवानिपुण सेवक । प्रतिक्षण किं करोमीति प्रश्नपरायण

किङ्कर.। सोऽहमेवंविधस्तावत्तवास्म्येव। सेवकाश्च सेवानुरूप फल-मिच्छन्ति, तथापि त्वत्तस्त्रिभुवनलक्ष्मीविश्राणनस्थूललक्षादपि न किञ्चिदहमधिक प्रार्थयिष्ये केवलमोमित्यक्षरमात्रमुच्चार्य मदीयस्त्व-मिति मा प्रतिपद्यस्व, अत परमेतदधिक न किञ्चित् ब्रुवे विज्ञाप-यिष्यामि(विज्ञपयामि)। त्वदङ्गीकारमात्रेणैव कृतकृत्यत्वात्। अय-माशय.—किल न खलु त्वमात्मस्वीकारेणायोग्यमनुगृह्णासि, त्वदङ्गी-काराच्चावगतस्वयोग्यत्वस्य मम समुखान्येव समग्राण्यपि श्रेयासि, तत. किमधिक प्रार्थ्यतामिति ॥ ८ ॥

अमी च वीतरागस्तवा. किल कलिकालसर्वज्ञप्रायै' श्रीहेम-चन्द्रसूरिभिर्भगवति वीतरागे समुत्तरङ्गभक्तिरागसागरै. श्रीकुमारपाल-भूपालानुग्रहाय ग्रथिता इत्येतदेव व्यनक्ति—

**श्रीहेमचन्द्रप्रभवाद्वीवीतरागस्तवादितः ।**
**कुमारपालभूपालः, प्राप्नोतु फलमीप्सितम् ॥९॥**

**श्री हेमचन्द्रसूरीश्वरे रचेला आ श्रीवीतराग-स्तोत्रथी श्रीकुमारपाल-भूपाल मुक्ति-कर्मक्षय लक्षण अभीप्सित-फलने प्राप्त करो. (९)**

**अव० श्रीहेमचन्द्र०—अय प्राग् व्याख्यात एवेति॥९॥**

इति विंशतितमप्रकाशस्यावचूर्णि समाप्ता ।

वि०—श्रीहेमचन्द्राभिधानाचार्यप्रभवात्सदर्भितादितः पूर्वोदित-स्वरूपाद्वीतरागस्तवात् कुमारपालभूपाल. श्रीकुमारपालदेवाभिधान-

श्रीसुमतिचक्रवर्ती ईप्सित मनोऽभिलषितमैहिकामुष्मिक फल मामोतु प्नुताम् । एव विधाय सद्भूतस्तुतिस्तोममन्यागण्यपुण्यप्रमाणाव भिलषितसिद्धिः स्तोतुः श्रोतुश्च सुलभैवेति समञ्जसम् ॥ ९ ॥

इति श्रीवीतरागस्तोत्रे विंशतितमस्याष्टी स्तवस्य पदयोजना ।

---

अवचूर्णि–विवरणकारस्य–

## प्रशस्तिः ।

चान्द्रे कुलेऽस्मिन्नमलश्चरित्रैः
प्रभुर्बभूवाभयदेवसूरिः ।
नवाङ्गवृत्तिच्छलतो यदीय
मद्यापि जागर्त्ति यशःशरीरम् ॥ १ ॥

तस्मान्मुनीन्दुर्जिनवल्लभोऽथ
तथा प्रथामाप निजैर्गुणौघै ।
विपश्चितां संयमिनां च वर्गे
धुरीणता तस्य यथाऽधुनापि ॥ २ ॥

तेषामन्वयमण्डन समभवत्सलजीवन दुःषमा–
मूर्च्छालस्य मुनिप्रतस्य भवन निःसीमपुण्यश्रियः।

श्रीमन्तोऽभयदेवसूरिगुरवस्ते यद्वियुक्तैर्गुणै-
र्दृष्टुं तादृशमाश्रयान्तरमहो ! दिक्चक्रमाक्रम्यते ।३।

यतिपतिरथ देवभद्रनामा
समजनि तस्य पदावतंसदेश्यः ।
दधुरधरितभावरोगयोगा
जगति रसायनतां यदीयवाचः ॥ ४ ॥

तदीयपट्टे प्रतिभासमुद्रः
श्रीमान् प्रभानन्दमुनीश्वरोऽभूत् ।
स वीतरागस्तवनेष्वमीषु
विनिर्ममे दुर्गपदप्रकाशम् ॥ ५ ॥

एवं सपादशतयुतविंशतिशतपरिमितः प्रबंधोऽयम् ।
लिखितः प्रथमादर्शो गणिना हर्षेन्दुना शमिना ॥६॥

शिवमस्तु ॥

इतिश्रीकलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रणीताः श्रीदेवभद्रमुनीन्द्रशिष्यरत्नश्रीप्रभानन्दमुनीन्द्रोपज्ञदुर्गपदप्रकाशाख्य-विवरणोपेताः विंशतिः स्तवाः ॥

यच्चन्द्रकुलाम्बरोदिततपापक्षाकपबिम्बोल्लसन्
मार्तण्डोपमसोमसुन्दरगुरोः शिष्याग्रणीः सूरिराट्।
श्रीमानस्ति विशालराजसुगुरुर्विद्यानन्दीसागर
स्तत्पादप्रणतोऽलिख स्तुतिसखीं जैनस्तुतेः पञ्जिकाम्।
सह पञ्चविंशाक्षरसपादपद्मशतमिताञ्जनिष्ठ सुग
मेयम् ।
वर्षे तिथिरविसकये (शितिपक्षे) तपसि गुरुपुष्पे ॥२॥

इति विंशतिप्रकाशानां पञ्जिका समाप्ता ॥



इति श्रीवीतरागस्तोत्रं समाप्तम् ॥



इति श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ९५ ।

# ॥ विषयानुक्रमः ॥

